★ कृष्णं वन्दे जगद्गुरुम् ★

म० म० वाचस्पतिमिश्र--ग्रन्थमालायाः

षष्ठं पुष्पम्

महामहोपाध्यायवाचस्पतिमिश्रकृतो

# व्यवहारचिन्तामणिः

सम्पादकाः

१. प० श्रीप्रभुनारायणशर्मा, धर्मशास्त्रोपाचार्यः

२. प० श्रीरामचन्द्र झा, ज्योतिषविभागाध्यक्षः

३. प० श्रीशशिनाथ झा, व्याकरणव्याख्याता

४. प० श्रीधर्मनाथ झा, प्राचीनपण्डितः

का० सिं० द० संस्कृत विश्वविद्यालयः, दरभङ्गा ।

प्रकाशकः

कामेश्वरसिंह-दरभङ्गा-संस्कृतविश्वविद्यालयः

कामेश्वरनगरम् ,दरभङ्गा

शकाब्दः १९०७, १९८५ ई०, मूल्यम्-१७.०० [सप्तदशरूप्यकाणि]

म० म० वाचस्पतिमिश्र--ग्रन्थावल्याः
षष्ठं पुष्पम्

महामहोपाध्यायवाचस्पतिमिश्रकृतो

# व्यवहारचिन्तामणिः

सम्पादकाः

प० श्रीप्रभुनारायण शर्मा

प० श्रीरामचन्द्र झा

प० श्रीशशिनाथ झा

प० श्रीधर्मनाथ झा

का० सिं० द० संस्कृत विश्वविद्यालयः, दरभङ्गा।

मूल्यम्

१९८५ ई० १७.०० ( सप्तदशरूप्यकाणि )

प्रथमसंस्करणम् — १०००

प्रकाशनाब्दः -- १९८५ ई०

सम्पादकाः

प० श्रीप्रभुनारायण शर्मा, धर्मशास्त्रोपाचार्यः ।

प० श्रीरामचन्द्र झा, ज्योतिषविभागाध्यक्षः ।

प० श्रीशशिनाथ झा, व्याकरणव्याख्याता ।

प० श्रीधर्मनाथ झा, प्राचीनपण्डितः ।

प्रकाशकः

का० सिं० द० संस्कृत विश्वविद्यालयः, कामेश्वरनगरम्, दरभङ्गा

मूल्यम् -- १७.०० ( सप्तदशरूप्यकाणि )

मुद्रकः — रमणप्रेस, बंगलागढ़, दरभङ्गा ।

# आमुखम्

अथायं प्रकाश्यते सर्वतन्त्रस्वतन्त्रेण मैथिलीजन्मभूमिथिला-ऽलङ्कारभूतेन श्रीनन्दनन्दनोपासकेन महामहोपाध्यायपरमगुरु-वाचस्पतिमिश्रेण विरचितः प्रशासकानां कण्ठाभरणायमानो व्यव-हारबोधनपटुर्व्यवहारचिन्तामणिः।

धृतवैवस्वतव्रतानां प्रशासकानामेव कर्त्तव्यं सज्जनानां पालनं दुर्जनानां निग्रहश्चेति सार्वभौमं तथ्यम्। तत्र तथाऽकुर्वाणाः प्रशा-सका अयशोभागिनो भवन्ति पश्चाच्च नरकगामिनोऽपि। यथा-ऽऽह मनुः---

"अधर्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्।
अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत्॥
अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चाप्यदण्ड्यन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति॥ इति।

अत्र दण्ड्यादण्ड्यज्ञानं व्यवहारदर्शनमन्तरा नैव सम्भवतीति व्यवहारज्ञानं परमावश्यकत्वेनापतति। तस्यैव व्यवहारस्य सम्यगवबोधाय प्रस्तुतोऽयं ग्रन्थो म० म० वाचस्पतिना परमगुरु-णेति।

अत्र व्यवहारचिन्तामणौ सर्वाण्यपि व्यवहाराष्टादशपदानि निपुणं निरूपितानि प्रसङ्गाद् विषयान्तराण्यपि क्षारनीरन्यायेन तथा संयोजितानि येन ग्रन्थस्योपयोगित्वमनिर्वचनीयतामुपेतम्।

मनीषिभिः सम्पादितस्यास्य ग्रन्थस्य परमोपयोगितां विलो-क्यैव प्रकाश्यतामानीय विदुषां पुरस्तात्प्रस्तूयते।

कल्पतां ग्रन्थकुसुममिदं प्रमोदाय सतां कर्त्तव्यबोधाय शास-कानां तोषाय जिज्ञासूनां मङ्गलाय जगतामर्चनाय च पत्युर्यदूना-मिति शम्।

सतामनुचरः—

वसन्तपञ्चमी
२६।१।८५

डॉ० जयमन्त मिश्रः,
कुलपतिः,
कामेश्वरसिंह दरभङ्गा-संस्कृत-विश्वविद्यालयः, दरभङ्गास्थस्य

# भूमिका

"अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम्

पुरा कृतयुगे लोकाः सत्यवादिनोऽहिंसकाश्चासन्। न प्रभावः कस्मिंश्चिद् द्वेषस्य मत्सरस्य वेति व्यवहारप्रयोजनसेवनासीत् तदानीम्। यदा प्रभृति लोकेषु शनैः शनैः धर्मो ह्रासत्वमुपेतो द्वेषादिकञ्च प्रवृद्धं तदा प्रभृत्येव व्यवहारस्यावश्यकत्वमनुभूतं तथाऽऽचारादिवद् व्यवहारोऽपि धर्मशास्त्रे स्थानं लेभे। तथा चोक्तं नारदेन—

"धर्मैकतानाः पुरुषा यदाऽऽसन् सत्यवादिनः।
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः॥
नष्टे धर्मे मनुष्याणां व्यवहारः प्रवर्त्तते"॥ इत्यादि।

अत्र बृहस्पतिरप्याह—

"धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः।
लोभद्वेषाभिभूतानां व्यवहारः प्रकीर्त्तितः"॥ इति।

अत एव मनुयाज्ञवल्क्यादिप्रणीतधर्मग्रन्थेषु व्यवहारविषया अपि सम्यक् प्रतिपादिताः। तदधिकृत्य निबन्धकारैरपि वाचस्पतिचण्डेश्वरादिभिर्विविधा ग्रन्था विरचिताः। व्यवहारचिन्तामणि-विवादरत्नाकर व्यवहारमयूखादयस्तेषु प्राथम्यं लभन्ते। तत्र व्यवहारश्च—

"वि नानार्थेऽव सन्देहे हरणं हार उच्यते।
नानासन्देहहरणाद् व्यवहार इति स्मृतः"॥

इति कात्यायनेनोक्तः। "ऋणादानादिनानाविवादपदविषयो निराक्रियतेऽनेनेति नानासंशयहारी विचारो व्यवहारः"।

"प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते" ॥

इति दीपकलिकादिकारैरुक्तम् । एवं प्रकारेण विविधैर्मनीषिभिर्व्यवहारस्वरूपमुपदर्शितम् । तस्य पदानि अष्टादशेति मनुराह—

"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रय ।
सम्भूय च समुत्थानं दत्तास्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयञ्च साहसञ्चैव स्त्रीसङ्ग्रहणमेव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्व एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह" ॥

इमान्येवाष्टादशपदान्याश्रित्य म० म० वाचस्पतिना ग्रन्थोऽयं व्यवहारचिन्तामणिर्निरमायि । अत्र निखिला अपि व्यवहारविषयाः प्रसङ्गादन्येऽपि च क्वचिद्व्यासेन क्वचित्समासेन च वर्णिताः । ग्रन्थोऽयं सत्यमेव व्यवहारमवजिगमिषूणां कृते चिन्तामणिरेवास्ति । स्वगुणगरिम्नाऽयं सर्वेषां व्यवहारग्रन्थानां मूर्द्धानमारोहति । अस्तु—

प्रकृतग्रन्थकारो म० म० वाचस्पतिर्मिथिलाऽलङ्कारभूतो विदुषामग्रणीः स्मार्त्तवाचस्पतिरभिनववाचस्पतिर्धर्मशास्त्रवाचस्पतिरिति संज्ञाभिर्लोकेप्रसिद्धः । अयं शङ्करपक्षधरादिसमसमयः पलिवारसमौलमूलके मैथिलभूसुरकुले समुत्पन्नः । अस्य पिता सदुपाध्यायगिरिपतिमिश्र आसीत् । अयं गुरुपदेन महामहोपाध्यायपदेन चालङ्कृतः आसीदिति पञ्जीप्रबन्धेनावगम्यते । एतदाश्रयो मिथिलाधिपतिमहाराजो हरिनारायणेति विरुद्भाग् भैरवसिंहो ग्रन्थकारस्य परम्परया श्यालकश्चाप्यासीत् । अस्य कालः १४२० ई० तः परम् १४६० ई० तः पूर्वं स्वीक्रियते ।

प्रकृतग्रन्थकारकृतयस्तु---

१. तीर्थचिन्तामणिः, २. सम्बन्धचिन्तामणिः, ३. आचारचिन्तामणिः, ४. कृत्यचिन्तामणिः, ५. शुद्धिचिन्तामणिः, ६. श्राद्धचिन्तामणिः, ७. शूद्रा-

रचिन्तामणिः, ८. प्रायश्चित्तचिन्तामणिः, ९. द्वैतचिन्तामणिः, १०. वादचिन्तामणिः, ११. व्यवहारचिन्तामणिः १२. नीतिचिन्तामणिः, १३. ह्निकचिन्तामणिः, १४. द्वैतनिर्णयः, १५. तिथिनिर्णयः, १६. विवादनिर्णयः, . महादाननिर्णयः, १८. पितृभक्तितरङ्गिणी, १९. कृत्यप्रदीपः, २०. कृत्यर्णवः, २१. दत्तकविधिः, २२. कल्पलतोद्धारः, २३. पितृतीर्थसङ्घः, २४. श्राद्धपद्धतिरित्येताः समुपलब्धाः सन्ति। अनेन धर्मशास्त्रीयास्त्रिंशन्निबन्धाः कृतास्तथानुमानखण्डटीकाश्चिन्तामणिप्रकाशादयो दश ग्रन्था न्यायशास्त्रीया अपि। यथोक्तं पितृभक्तितरङ्गिणी निबन्धान्ते स्वयमेव ग्रन्थकृता—

"शास्त्रे दश स्मृतौ त्रिंशन्निबन्धा येन यौवने।
निर्मितास्तेन चरमे वयस्येष विनिर्ममे" ॥ इति।

अनुपमातिदुर्लभस्यास्य निबन्धग्रन्थस्य प्रकाशनेन न केवलविद्वज्जनानामेव प्रत्युत समेषां सामाजिकानां लोकहितैषिणां कृते संस्कृतविश्वविद्यालयीयाधिकारिभिरप्रकाशितं चिन्तामणिग्रन्थं प्रकाश्य महत्पुण्यमासादितम्।

आशासे नूनमेवानेन प्रकाशनेन सम्पूर्णं भारतं विशेषतो मैथिलीजन्मस्थलं मिथिलाक्षेत्रं च विवादतो मुक्तिं लप्स्यत इति।

अन्ते च गुणैकपक्षपातिनः सज्जनान् प्रकाशनाशेषदोषक्षमायै सम्प्रार्थ्य विरम्यते विस्तरादिति।

वसन्तोत्सवः
२६।१।१९८५

प० श्रीप्रभुनारायणशर्मा
उपाचार्यः
स्नातकोत्तर-धर्मशास्त्रविभागस्य
कामेश्वरसिंह-दरभङ्गा संस्कृत-विश्वविद्यालयस्थस्यः
दरभङ्गास्थस्य

# महामहोपाध्यायवाचस्पतिमिश्रविरचितस्य
# व्यवहारचिन्तामणिग्रन्थस्य विषयसूची

॥ इति ॥

# महामहोपाध्यायवाचस्पतिकृतव्यवहारचिन्ता-मणेरशुद्धयशुद्धिपत्रम्

| पृ० | पंक्तिः | अशुद्धशब्दाः | शुद्धशब्दाः |
|---|---|---|---|
| १ | ७ | धर्मैकतानां | धर्मैकतानाः |
| १ | ७ | न | च |
| १ | १३ | समयग् | सम्यग् |
| १ | २० | मोले द्विजात्तमैः | मौलैर्द्विजोत्तमैः |
| २ | ८ | स्मृयर्थयोर्विरोधे | स्मृत्यर्थविरोधे |
| २ | २३ | धर्मासमं | धर्मासनं |
| ३ | ५ | दर्शनाशत्तस्तत्क्षमो | दर्शनाशक्तस्तत्क्षमो |
| ३ | २ | प्रवत्तयेद् | प्रवर्त्तयेद् |
| ३ | १६ | परलोकशङ्कम् | परलोकसशङ्कम् |
| ३ | २३ | गोरिव | गौरिव |
| ४ | ५ | समभ्यस्तत्प्रयत्नतः | ससभ्यस्तत्प्रयत्नतः |
| ४ | ८ | तत्त्वज्ञो | तत्त्वज्ञौ |
| ४ | १० | आकारणे | आकरणे |
| ४ | १८ | सैनिकः नाञ्च | सैनिकानाञ्च |
| ५ | ५ | कृषिरः सोपजीविषु | कृषिभिरुपजीविषु |
| ५ | ८ | त्रैविध्यैरेव | त्रैविधैरेव |
| ५ | २५ | वक्तव्यः | वक्तव्यम् |
| ७ | १ | सम्यक् | सम्यग् |
| ६ | १ | द्रव्यापचाराद् | द्रव्यापहाराद् |
| ९ | ३ | कार्यम्वा | कार्यं वा |
| ६ | ७ | आसेधकालम् आसिद्धः | आसेधकालमासेद्धा |

| पृष्ठ: | पंक्ति | अशुद्धाशब्दा: | शुद्धाशब्दा: |
|---|---|---|---|
| ६ | ८ | आसेधयेति | आसेधमति |
| ६ | १२ | नापराप्नुयात् | नापराध्नुयात् |
| ९ | २३ | गृहीतगहणो | गृहीतग्रहणो |
| १० | ७ | क्वचित्पतिनिध्य | क्वचित्प्रतिनिध्य |
| १० | १६ | दण्डा: | दण्ड्य: |
| १० | १७ | न्यायार्थमुपस्थितये | न्यायार्थमुपस्थिते |
| १० | २० | रक्षणीयौ | रक्षणीयो |
| १३ | ११ | न्यूनतामधिकता वा | न्यूनतामधिकतां वा |
| १३ | २३ | उदयो-बुद्धि: | उदयो-बृद्धि: |
| १३ | २४ | मामपीडियदिति | मामपीडयदिति |
| १४ | ६ | सङ्कीर्ण्य | सङ्कीर्त्य |
| १४ | ७ | प्रतिज्ञाहे | प्रतिज्ञाहेतू |
| १४ | १६ | असार्द्ध | असाध्यं |
| १४ | २० | कार्याधाराविहीनश्च | कार्याधारविहीश्च |
| १५ | २० | चौरवच्चासयेत्तन्नु | चौरवत्त्रासयेत्तन्तु |
| १६ | १६ | सद्योवाद: | च यो वाद: |
| १६ | २० | षडाद्विदे | षडाद्विके |
| १७ | १४ | कालं तत्त्वबुभुत्सया | कालतत्त्वबुभुत्सया |
| १७ | १७ | दोष: तास्मिन् | दोषस्तस्मिन् |
| १७ | २० | दण्ड्यादाप्यश्च | दण्डयो दाप्यश्च |
| २३ | ११ | स्याद्वादिन द्वयो: | स्याद्वादिनो द्वयो: |
| २३ | १२ | नचार्थिं | नचार्थं |
| २३ | ५ | अथोत्तरा भाषा: | अथोत्तराभासा: |
| २६ | १ | संप्रवेशते | सम्प्रवेशिते |
| २६ | ६ | विवादविधि | बिवादावधि |
| २७ | १० | मानुषी | मानुषीम् |
| ३० | १४ | सोत्तरक्रियाम् | सोत्तरक्रियम् |

| पृष्ठः | पंक्तिः | अशुद्धाशब्दाः | शुद्धाशब्दाः |
|---|---|---|---|
| ३२ | १२ | वदेन्वादी | वदन्वादी |
| ३३ | १५ | लेसोद्देशस्तु | लेशोद्देशस्तु |
| ३५ | ३ | साक्ष्यादीनामस्मारणादिः | साक्ष्यादीनामस्मरणादिः |
| ३८ | २१ | भवेद्यन्ते | भवेयुस्ते |
| ३९ | २० | शुचिः क्रियश्च | शुचिक्रियश्च |
| ४० | २४ | कैरवहुनां | द्वैधे बहूनां |
| ४० | २५ | गुणवत्तराः | गुणवत्तमाः |
| ४४ | १६ | सिह्नवेनैव | निह्नवेनैव |
| ४४ | १६ | परसाक्षिणो | परे साक्षिणो |
| ४४ | २० | न भवन्तीति | भवन्तीति |
| ६१ | १० | सष्टानि | सृष्टानि |
| ६५ | ६ | भुक्तिं | भुक्तिः |
| ८५ | १६ | परितापार्द्दितन्निधान् | परितावार्द्दिताञ्जनान् |
| ८५ | १७ | बालवृद्धावदासींश्च | वालवृद्धावदासाँश्च |
| ९४ | २० | यत्त | यत्र |
| ९४ | २२ | विधना | विधिना |
| ९६ | १३ | सर्वान्निृणेन | सर्वानृणेन |
| ९९ | १५ | मन्येताजितोस्मीति | म येत जितोस्मीति |
| १०१ | २ | स्वतन्त्रन्तथैव | स्वतन्त्रस्तथैव |
| १०३ | १४ | वृविणोति | विवृणोति |

★ ★ ★

महामहोपाध्यायवाचस्पतिकृतः

# व्यवहारचिन्तामणिः

"आराध्य नन्दनन्दनमनुसन्धाय प्रयत्नतो ग्रन्थान् ।
श्रीवाचस्पतिबिबुधो व्यवहृतिचिन्तामणिन्तनुते ॥
भाषोत्तरक्रियापादानिर्णयः सोपदेशकः ।
चतुष्पात्तत्वविषयो व्यवहारो निरुप्यते" ॥

तत्रादावुपदेशे वर्णनीये
तन्मूलव्यवहारसमयमाह---

नारदः—"धर्मैकतानां पुरुषा यदा न सत्यवादिनः ।
तदा न व्यवहारोऽभून्न द्वेषो नच मत्सरः ॥
नष्टे धर्मे मनुष्याणां व्यवहारः प्रकीर्त्तितः ।
द्रष्टा च व्यवहाराणां राजा दण्डधरः स्वयम्" ॥

व्यवहारो – विवादः । नष्टे धर्मे कलियुगे । दण्डधर इत्यनेनोद्धृतशासकत्वमुक्तम् ।

याज्ञवल्क्यः—"यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात् क्रतुभिस्तेन सहस्रशतदक्षिणैः" ॥

सम्यक्—यथाशास्त्रोक्तम् ।

"इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।
व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोन्वहम्" ॥

कात्यायनः—"विनीतवेषो नृपतिः सभाङ्गत्वा समाहितः ।
आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम् ॥
सतु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलै द्विजोत्तमैः ।
धर्मशास्त्रार्थकुशलै - रर्थशास्त्र - विशारदैः ॥

स प्राड्विवाकस्सामात्यः सब्राह्मणपुरोहितः ।
स सभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः" ॥

विनीतेति - तथा चानुद्धतवेषस्य राज्ञो दर्शने वादिनो न क्षुभ्यन्तीत्यर्थः । सम्यग्वादिसिद्धौ तत्त्वनिरूपणं सुकरं भवतीति भावः । आसीनत्वप्राङमुखत्वेऽदृष्टार्थे । स्थिरैर्धर्मविनिश्चलचित्तैः ।

धर्मशास्त्रेति - तथा च—धर्मशास्त्रार्थशास्त्रयोरबिरोधेन विचारणीयम् । बिरोधे तु धर्मशास्त्रोक्तमेव ग्राह्यम् । तदुक्तं भविष्ये—

"स्मृत्यर्थयोर्बिरोधे तु अर्थशास्त्रस्य धारणम् ।
परस्परबिरोधे तु न्याययुक्तं प्रमाणवत्" ॥

स्मृतिः - धर्मशास्त्रम् मन्वादिसंहिता । अर्थोऽर्थशास्त्रदण्डनीत्यादि । धर्मशास्त्रयोरेव तु परस्परबिरोधे विषयभेदादिनाप्यसमाधेये निर्युक्तिकं बाध्यत इत्यर्थः । नारदोप्याह—

"धर्मशास्त्रबिरोधे तु युक्तियुक्तो विधिः स्मृतः ।
व्यवहारो हि बलबान् धर्मस्तेनावहीयते" ॥

व्यवहारो - युक्तिः । प्राड्विवाको वक्ष्यते प्रेक्षकः । सम्यग्विचारवता राजा विचारजनिता तु पश्चात्तत्रैव विचारसमुदायैस्सह स्वर्गे तिष्ठतीत्यर्थः ।

नारदः—"राजा धर्मसहायस्तु द्वयोर्विवदमानयोः ।
सम्यक्कार्याण्यवेक्षेत रागद्वेषविवर्ज्जितः ॥
धर्मेणोद्धरतो राज्ञो व्यवहारानकृतात्मनः ।
सम्भवन्ति गुणाः सप्त सप्तवह्नेरिवार्चिषः ॥
धर्मश्चार्थश्च कीर्त्तिश्च लोकपङ्क्तिरसङ्ग्रहः ।
प्रजाभ्यो बहुमानश्च स्वर्गे स्थानञ्च प्राप्यते ॥
तस्माद्धर्मासमं प्राप्य राजा विगतमत्सरः ।
समः स्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम्" ॥

उद्धरतः - सम्यङ् निर्णयतः । लोकपङ्क्तिः-लोकैः-स्तोतव्यतोपग्रहोद्भूतनीयतम् । वैवस्वतव्रतम्-सर्वभूतसमत्वम् ।

"श्रुतिस्मृतिविरुद्धञ्च भूतानामहितञ्च यत्।
न तत्प्रवर्त्तयेद्राजा प्रवृत्तञ्च निवर्त्तयेत्॥
न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतम्भवेत्।
तदप्याम्नाय विहिते पुनर्न्याये निवेशयेत्"॥

आम्नायो-वेदः। स्वयञ्च व्यवहारदर्शनाशक्तस्तत्क्षमो धार्मिको ब्राह्मणो नियोज्यस्तदाह-

"यदा कार्यवशाद्राजा न पश्येत्कार्यनिर्णयम्।
तदा नियुज्याद्विद्वासं ब्राह्मणं वेदपारगम्॥
दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्"॥

कार्यवशात्-राजकार्यान्तरवशात्। कार्यनिर्णयम्-भाषोत्तरादिकम्। विद्वांसम्-वेदाविरुद्धतर्कपूर्णमतिम्। वेदपारगम्-परिशीलितधर्मशास्त्रम्। दान्तम्-तपःक्लेशसहम्।

कुलीनम्—सङ्करादिदोषरहितमातृपितृपरम्पराकम्। मध्यस्थम्-सर्वत्र समदृष्टिम्। अनुद्वेगकरम्-मत्सरपारुष्याद्यकर्त्तारम्। स्थिरम्-लोभाद्यनाकृष्यम्। परत्रभीरुम्-सदा परलोकमशङ्कम्। धर्मिष्ठम्--स्ववर्णाश्रमविहितक्रियानिष्ठम्। उद्युक्तम्—निरलसम्। क्रोधवर्जितम्-तत्त्वविचारविरुद्धक्रोधहीनम्।

क्षमब्राह्मणाभावे क्षत्रियस्तदभावे वैश्यो नियुज्यस्तदाह स एव—

"यदि विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत्।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्ज्जयेत्"॥

मनुः—"यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः"॥

व्यासः--"द्विजान् विहाय यः पश्येत्कार्याणि वृषलैस्सह।
तस्य प्रक्षुभ्यते राष्ट्रं बलङ्कोषञ्च नश्यति"॥

वृहस्पतिः—"राजा कार्याणि दण्डे तु प्राड्विवाकोऽथ वा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सम्यक् शास्त्रमते स्थितः ॥
विवादे पृच्छति प्रश्नं प्रतिप्रश्नन्तथैव च ।
प्रियपूर्वं प्रागवदति प्राड्विवाकस्ततः स्मृतः" ॥

व्यासः—"विचारानुगतं पृष्ट्वा समभ्यस्ततत्प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः" ॥

इदन्त्वस्य निरुक्तिमात्रम् । प्राड्विवाकत्वन्तु तस्य व्यवहारक्षमतैव ।

वृहस्पतिः—"शब्दाभिधाने तत्त्वज्ञो गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥
आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्त्तव्यः शुद्धपूरुषः" ॥

शब्दो-व्याकरणम् । अभिधानम्-कोषः । सभ्याधीनः-विचारकाधीनः । पूरुषः-प्रैष्यः ।

कात्यायनः—"कुल - शील - वयोवृत्त - वृत्तवद्भिरमत्सरैः ।
वणिग्भिः स्यात् कतिपयैः कुलभूतैरधिष्ठितम्" ॥

करणमित्यन्वयः ।

"येचाऽरण्यचरास्तेषामरण्ये शरणं भवेत् ।
सेनायां सैनिकानाञ्च सार्थेषु वणिजान्तथा" ॥

शरणम्-सभा ।

"कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षः स्मृतोऽधिकः ।
सर्वेभ्योऽभ्यधिको राजा धर्मं यत्तेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः" ॥

कुलं वादिनोर्वंश्याः । आदिपदाच्छ्रेणिगणश्च । तत्र श्रेणिर्वणिगादिसमूहः । गणो-विप्रसमूहः। सभ्यः विमुक्तः साधुः अध्यक्षः प्राड्विवाकः-एतेषां राजान्तानां निर्णयकरणे उत्तरोत्तरस्य बलवत्वं ज्ञानोत्कर्षादित्यर्थः। अभियुक्तवचनन्तु सर्वथादरणीयम्। तदाह

नारदः—"वणिक्क्रियाप्रयोगेषु कृषिरः सोपजीविषु ।
अशक्यो निर्णयो ह्यत्र तत्वज्ञैरेव कारयेत्" ॥

उपलक्षणञ्चैतत् । यो यत्र विज्ञस्तत्साहित्येन निर्णेतव्यमित्यर्थः ।

तथा—"तपस्विनान्तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदाञ्चैव न स्वयं कोपकारणात्" ॥

येषां कोपाद्भयं भवति तेषां विचारस्तज्जातीयैरेव कर्त्तव्यः ।

मनुः—"आश्रमेषु द्विजातीनाङ्कार्ये विवदताम्मिथः ।
न विक्रयान्नृपो धर्मं चिकीर्षन् हितमात्मनः" ॥

आश्रमेषु ब्रह्मचर्यादिषु किं विहितं किमविहितमिति विमतौ तु भङ्गि-प्रकोपभीत्या विचारप्रवृत्तोपनविशिष्यधर्मं कथयेदित्यर्थः ।

"यथार्हमेतानभ्यर्थ्य ब्राह्मणैः सह पार्थिवः ।
शान्त्वेन प्रशमस्यादौ स्वधर्मं प्रतिपादयेत्" ॥

शान्त्वेन—प्रियवचनेन, आदौ तेषाङ्कोपं शमयित्वा ब्राह्मणद्वारैव तद्धर्म तेषु प्रतिपादयेदित्यर्थः ।

## अथ सभ्योपदेशः

तत्र बृहस्पतिः—"अज्ञानतिमिरोपेतान् सन्देहपटलान्वितान् ।
निरामयान् यः कुरुते शास्त्रोक्तेन शलाकया ॥
इह कीर्तिं राजपूजां लभते स्वर्गतिञ्च सः ।
तस्मात्संशयमूहानां प्रकर्त्तव्यश्च निश्चयः ॥"

नारदः—"नानियुक्तेन वक्तव्यं व्यवहारे कथञ्चन ।
नियुक्तेन तु वक्तव्यः सपक्षपतितं वचः ॥"

शास्त्रज्ञे नानियुक्ते नापि वक्तव्यम् । तदाह स एव—

"अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥"

दैवीं-शास्त्रीयाम् ।

बृहस्पतिः— "लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥"

अधर्मप्रवृत्ते राज्ञि सभ्यकृत्यमाह—

कात्यायनः—"अधर्माज्ञां यदा राजा नियुञ्जीत विवादिनाम् ।
विज्ञाप्य नृपतिं सभ्यः तदा सम्यङ्निवर्त्तयेत् ॥
सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः ।
श्रृणोति यदि नो राजा स्यात्तु सभ्यस्तदाऽनृणः ॥
न्यायमार्गानुपेतस्तु ज्ञात्वा चित्तं महीपतेः ।
वक्तव्यं तत्प्रियं नात्र स सभ्यः किल्विषी भवेत् ॥
अधर्मतः प्रवृत्तं हि नोपेक्षेरन् सभासदः ।
उपेक्षमाणाः सनृपाः नरकं यान्त्यधोमुखाः ॥
अन्यायतो यियासन्तं येन यान्ति सभासदः ।
तेऽपि तद्भागिनस्तस्माद् बोधनीयः स तैर्नृपः ॥"

अधर्माज्ञा—अधर्मानुबन्धि-आज्ञा । स सभ्य इति यो राज्ञोक्तमधर्ममनुमोदतीत्यर्थः । अधर्मत इति तथाचोत्पथगामिनो राज्ञ उपेक्षणे सभ्यस्यापि दोष इत्यर्थः । अन्यायत इति तथा चोत्पथगामिनो राज्ञोऽनुसरणे सभ्यस्यापि दोषः इत्यर्थः ।

मनुः—"पादोऽधर्मस्य कर्त्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥"

अधर्मस्य कर्त्तारं वादिनम् । राजपदमिह विचारकपरम् ।

कात्यायनः—"कार्यस्य निर्णयं सम्यक् ज्ञात्वा सभ्यस्तथा वदेत् ।
अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक् ॥
सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तथा ।
कार्यन्तु कार्यिणामेवं निश्चितन्तु विचारयेत् ॥"

एवं निश्चितमसम्यग्विचारितं पुनर्विचारयेदित्यर्थः ।

बृहस्पतिः— "अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥"

विष्णुः—कूटसाक्षिणां सर्वस्वापहारः कार्य उत्कोचजीविनां सभ्यानाञ्च ।

बृहस्पतिः– "कूटसाक्षी कूटसभ्यः ब्रह्महा च समाः स्मृताः ।
सुनिर्णीते तु यद्यर्थे संभाषेत वहोर्थिना ॥"

## अथ व्यवहारं विविनक्ति

कात्यायनः—"विनानार्थेऽवसन्देहे हरणं हारमुच्यते ।
नानासन्देहहरणाद् व्यवहार इति स्मृतः ॥"

सच द्विविधः । यदाह—

नारदः—"सोत्तरोऽनुत्तरश्चैव स विज्ञेयो द्विलक्षणः ।
सोत्तरोऽभ्यधिको यत्र विलेखात्पूर्वकः पणः ॥"

यत्र भाषालिखनात्पूर्वं योऽत्र जीयते स इयन्तं दण्डं जेत्रे ददातीत्येवं रूपः । पणो-वृत्तः स सोत्तरो व्यवहारः । तत्र--सोत्तरपणे विवादे पराजितः पणञ्च दण्डञ्च दाप्य इत्याह—

स एव— "विवादे सोत्तरपणे द्वयोर्यस्तत्र हीयते ।
स पणं स्वकृतं दाप्यो विनयञ्च पराजये ॥"

स चायं व्यवहारो यदा द्रष्टव्यस्तदाह—

कात्यायनः—"सभास्थाने तु पूर्वाह्णे कार्याणां निर्णयं नृपः ।
कुर्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्षणः ॥"

सचायं व्यवहारश्चतुष्पादित्याह—

बृहस्पतिः—"पूर्वपक्ष आद्यपादो द्वितीयश्चोत्तरो मतः ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥"

तथा—"मिथ्योक्तौ स चतुष्पादः प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये च स विज्ञेयो द्विपात्सम्प्रतिपत्तिषु ॥"

सम्यग्भाषोत्तरे सतीति विशेषणीयम् । अतएव भाषोत्तरानर्हा यत्र तत्रार्थिवादो निर्णयश्चेति पादद्वयमेव यत्र चोत्तरमाभासम्, तत्र भाषाप्रत्यर्थिवचननिर्णया इति पादत्रयमेव ।

नच सम्प्रतिपत्तावपि भाषोत्तरनिर्णया इति पादत्रयमिति वक्तव्यम् । उत्तरवादिनैव भाषार्थस्याङ्गीकृतत्वेन निर्णेतव्याभावात्, स्वोक्त्यैव तस्य पराजितत्वात् । अत्र निर्णयकरणरूपायास्तृतीयप्रवृत्तेरभावात् ।

नारदः—"गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न सिद्ध्यति ॥
एकस्य बहुभिस्सार्द्धं स्त्रीभिः प्रैषकरैस्तथा ।
अनादेयो भवेद्वादो विद्वद्भिः परिकीर्त्तितः ॥
राज्ञा विवर्ज्जितो यस्तु यस्तु पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्येऽपि ये पुरग्राममहाजनविरोधिनः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्त्तिताः ॥"

याज्ञवल्क्यः—"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति यद्राज्ञे व्यवहारपदं हि तत् ॥"

तत्र पूर्वपक्षो भाषापादः । स चार्थिवाच्यः । अर्थित्वञ्चाधिकपीडाव-

शात् । सा च द्रव्यापचाराद्वा प्रारिप्सितकार्यभङ्गप्रसङ्गाद्वा, नतु प्रथमनिवेदनमात्रेण । तदाह-

व्यासः -- "यस्य चाप्यधिका पीडा कार्यम्वाप्यधिकं भवेत् ।
तस्यार्थिभावो दातव्यो नयः पूर्वं निवेदयेत् ॥"

नारदः - "वक्तव्येऽर्थेन तिष्ठन्तमुत्क्रामन्तञ्च तत्त्वतः ।
आसेधयेद्विवादार्थं यावद्विद्वानदर्शनम् ॥

आसेधकालम् - आसिद्ध आसेधयोति वर्त्तते ।
सविनेयोऽन्यथाकुर्वन्नासेद्धा दण्डमर्हति ॥"

आसेद्धा विवादविमुखप्रत्यर्थिधर्त्ता अर्थी---

"नदीसन्तारकान्तारदुर्द्देशोपप्लवादिषु ।
आसिद्धः परमासेधमुत्क्रामन्नापराप्नुयात् ॥"

स एव -"निर्वेष्टकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकर्मोद्यतस्तथा ॥
गवां प्रचारे गोपालाः शस्यबन्धे कृषीवलाः ।
शिल्पिनश्चापि तत्काले आयुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखोव्रती ।
विषमस्थाश्च नासेध्या नचैतानाह्वयेन्नृपः ॥"

निर्वेष्टकामो विवाहप्रवृत्तः, । आयुधीयाः शस्त्रोपजीविनः अप्राप्तव्यवहारः षोडशवर्षावरवयस्कः । एते उत्तमवर्णादिना नासेध्या न विधारणीयाः निवेदितेऽपि वादिना राज्ञा नाह्वातव्याः । तत्कार्यसमाप्तिपर्यन्तम् तत्कार्यविरोधात् ।

कात्यायनः -"गृहीतगहणो न्यायो न प्रवर्त्त्यो महीभृता ।
तस्य वा तत्समर्प्यं स्यात् स्थापयेद्वा परस्य तत् ॥"

गृह्यत इति ग्रहणं, विवादपदं वस्तु, तच्च प्रतीतिपक्षो प्रत्यर्थिनि, अन्यथालम्भे यावद्विचारं धार्यम् । स्वयं विवादाशक्तौ प्रतिनिधिमाह—

नारदः—"अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥"

तयोरिति-वादिनोः । तेन नियुक्तस्यैव जयपराजयौ । नियोक्तुर्व्यव-हार्याविरत्यर्थः ।

वृहस्पतिः—"अप्रगल्भ - जडोन्मत्त-वृद्धस्त्रीबाल-रोगिणाम् ।
पूर्वोत्तरं वदेत्तद्वदनियुक्तोऽथवा नरः ॥"

एतेषां भाषासूत्तरञ्च नियुक्तोऽनियुक्तो वा ब्रूयादित्यर्थः । क्वचित्पति-निध्यभावमाह—

कात्यायनः—ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।
अन्येष्वप्यभिशापेषु प्रतिवादी न दीयते ॥
मनुष्यमारणे स्तेये परदाराभिमर्षणे ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटहरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्त्ता तु विवदेत्स्वयम् ॥"

नारदः—"यो न भ्राता नच पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद् व्यवहारेष्वविब्रुवन् ॥"

न्यायार्थमुपस्थितये करणप्रवेशे प्रतिभूर्ग्राह्यः । अर्थिनोऽपि मन्दपक्षस्य दण्डभिया पलायनसम्भवात् ।

याज्ञवल्क्यः—उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

प्रतिभुवस्त्वभावे दूतो रक्षणीयौ, यदाह-

याज्ञवल्क्यः—"अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्दूताय वेतनम् ॥"

दूतो राज्यप्रैष्यस्तद्धर्त्ता । तत्त्वतः पराजितो विचारदोषशङ्कया पुन-र्विचारं याचमानो विवादपदद्विगुणन्दण्डमङ्गीकार्य्यविवादः कार्य्यः ।

नारदः— 'तीरितञ्चानुशिष्टञ्च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥"

तीरितं-निर्णीय समापितम् । अनुशिष्टम् परेषु तथा प्रतिपादितम् । असद्विचारे विचारान्तरमर्हत्येवेत्याह--

स एव-"असाक्षिकन्तु यद्दृष्टं विमार्गेण च तीरितम् ।
असम्मतं मतैर्दृष्टं पुनर्दर्शनमर्हति ॥"

असाक्षिकम्-अप्रामाणिकम् ।

कात्यायनः--"तत्राभियोक्ता प्रब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरुक्ते सदस्यस्तु प्राड्विवाकस्ततः परम् ॥"

आक्षेप्ता तु न कालं लभते किन्त्वाक्षिप्त एव तदाह--

कात्यायनः--"यस्मात्कार्ये समारम्भश्चिरात्तेन विनिश्चितः ।
तस्मान्न लभते कालमभियुक्तस्तु कालभाक् ॥"

नारदः--"प्रत्यर्थी लभते कालं त्र्यहं पञ्चाहमेव वा ।"

अस्यापवादमाह —

बृहस्पतिः—"अभियोक्ताऽप्रगल्भत्वाद् वक्तुं नोत्सहते यदि ।
तदा कालः प्रदातव्यः कार्यशक्त्यनुरूपतः ॥"

इति व्यवहारमुखम् । सच व्यवहारश्चतुष्पात् । तदाह--

बृहस्पतिः--"भाषोत्तरस्तु पादौ च क्रियापादस्तथैव च ।
प्रत्याकलितपादश्च व्यवहारश्चतुष्पदः ॥

## अथ भाषापादः

बृहस्पतिः--प्रतिज्ञादोषनिर्युक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः ॥
अल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो निराकुलः ।

विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधकः ॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसम्बद्धं प्रतिवादी तदोत्तरम् ॥"

साध्यं साध्यस्य सिद्धार्हस्य प्रत्याय्य धर्मविशिष्टस्य धर्मिणो वचनं पक्षं विदुस्तेन स्वमतस्य वचनं सङ्कुचितमित्यर्थः। प्रतिज्ञादोषैः प्रतिज्ञाविरोधादिभिरुज्झितं सत्कारणान्वितम् अस्फुटदोषलिङ्गसम्पन्नम्। एवञ्च त्वं मह्यं शतस्य धारयः नतु ऋणत्वेन गृहीततावद्धनकत्वादिति भाषाशरीरमुक्तं भवति। अत्र च देहीत्यर्थितावयञ्जकमात्रम्, नतु भाषान्तर्गतमित्यवधेयम्। निश्चितमप्रचलितार्थकम्। तेन धारयति न वेत्यादिकमित्यपास्तम्। लोकसिद्धम् लोकव्यवहाराविरुद्धार्थकम्।

एवञ्च--तृणकाष्ठेष्टका किन्नु सूत्रचर्मास्थिचर्मणाम्।
हेति पुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तते" ॥

इति वृहस्पतिवचनमालम्ब्य लोकविरुद्धानन्तवृद्धिप्रार्थनमपि भाषेत्यपास्तम्। अतएव—

वृहस्पतिः—"केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।
युक्तिहीनविचारे तु धर्महानिः प्रजायते" ॥

इति युक्तिर्व्यवहारः। भवदेवस्तु-यत्र श्रुतमात्र एव लोकानां सम्प्रत्ययस्तल्लोकसिद्धम्। तेन निर्धनकृतो लक्षसङ्ख्यकस्वधनप्रयोगाक्षेपो वारित इत्याह-अल्पाक्षर इति।

यावद्भिरक्षरैर्विना विशिष्टहेतुप्रयुक्तसाध्योपहितपक्षप्रतिपादनं न भवति तावन्मात्राक्षरकः। निरुक्तार्थक एव निराकुलः पौर्वापर्यविपर्यासादिशून्यः, तेन स्वबोधो भवति विरोधिकारणैः स्वसाध्यविपरीतव्याप्तैर्हेतुभिः शून्यः, तथा-मद्विभक्तोप्ययमर्जकत्वादिदानीमर्ज्जितं मयि ददातिवत्यादिकं तद्व्यतिरिक्तः सत्पक्षः।

अत्र मद्विभक्तत्वस्य पक्षविशेषणत्वे प्रतिज्ञाविरोधसम्भवे प्रतिज्ञादोषो निर्युक्तमित्यत एव तल्लाभे इदं प्रपञ्चमात्रमिति द्रष्टव्यम्। विरोधिप्रतिषेधक इति यावत्प्रकारकमुत्तरं सम्भाव्यम् तावत्प्रतिषेधको यथा भवति तथा पक्षनिर्द्देशः कार्य इत्यर्थः।

नारदः—"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता।
तद्धानौ हीयते वादी तरँस्तामुत्तरो भवेत्"॥

प्रतिज्ञा तावत्त्वं मह्यं शतस्य धारय इत्येवं रूपा। तस्या हानौ अपरिपूरणे हीयते भज्यते, तांस्तरन् पूरयन् उत्तरः प्रेष्ठो भवतीत्यर्थः।

बृहस्पतिः—"यथार्थमभियुञ्जीत न तं विप्रकृतिं नयेत्।
न च पक्षान्तरं गच्छेद्गच्छन् पूर्वात्स हीयते"॥

विप्रकृतिम्—न्यूनतामधिकता वा। यथा शतं धारयसीति भाषित्वा पश्चात्पञ्चाशतंसार्द्धशतं वेति पुनर्भाषणम्।

पक्षान्तरमिति शतं सुवर्णांशं धारयसीत्यादौ भाषित्वा विरम्य पश्चाद्गाश्च धारयसीति पक्षान्तरमित्यर्थः। इदञ्चोत्तरावरोधात्पूर्वमविरुद्धमेव। तदुत्तरन्तु विरुद्धम्" "उत्तरेणावरुद्धस्य निवृत्तं लेखनं भवे दित्यादि वचनात्।

तथा—"उपस्थिते तु तत्तस्मिन् वादी पक्षं प्रकल्पयेत्।
निरवद्यं सत्प्रतिज्ञं प्रमाणागमसंयुतम्॥
देशकालसमो मासं पक्षाहो जातिनाम च।
द्रव्यसङ्ख्योदयं पीडां क्षमा लिङ्गञ्च लेखयेत्"॥

आगमः—ऋणादिप्रमाणं साक्षिपत्रादिकम्।

यद्यपि तृतीयपादे पत्रादिकीर्त्तनम्, तथाऽपि पक्षस्य सम्भावनार्थमिदानीमपि तत्सामान्याकारेण निर्द्देश्यम्। उदयो-बुद्धिः। पीडां यद्दहमृणिकस्तदा प्रत्यासत्तौ हृतेऽपि मामपीडियदिति तदर्थं पीडितोऽयं मयेति वाच्यमपीडने वा क्षमाहेतुर्वाच्यः।

कात्यायनः –"निवेश्य कालं वर्षञ्च मासं पक्षं तिथिस्तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती रयः ॥
साध्य प्रमाणं द्रव्यञ्च सङ्ख्यानाम तथात्मनः ।
राज्ञाञ्च क्रमशो नाम निरासं साध्यनाम च ॥
क्रमात्पितॄणां नामानि पीडामाहर्तृदापकौ ।
क्षमा लिङ्गानि चान्यानि पक्षं सङ्कीर्ण्य कल्पयेत्" ॥

एतत्सर्वं विरोध्यन्तरनिराकरणाय वाच्यम् । अन्यथा तु प्रतिज्ञाहे एव वाच्यौ ।

नारदः–"भाषायामुत्तरं यावत् प्रत्यर्थी नाभिलेखयेत् ।
अर्थी तु लेखयेत्तावद्यावन्नोत्तरदर्शनम् ॥
अवष्टब्धस्योत्तरेण निवृत्तं लेखनम्भवेत् ॥

बृहस्पतिः–"ऊनाधिकं पूर्वपक्षं तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ" ॥

## अथ पक्षाभासास्तानाह

बृहस्पतिः –"अप्रसिद्धं सदोषञ्च निरर्थं निःप्रयोजनम् ।
असाध्यं वा बिरुद्धम्वा पक्षं राजा विवर्जयेत् ॥
न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।
अल्पार्थः स्वार्थहीनश्च स दोषः परिकीर्त्तितः ॥
अल्पापराधश्चाल्पार्थो निरर्थक इति स्मृतः ।
कार्याधाराविहीनश्च विज्ञेयो निष्प्रयोजनः ॥
कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः ।
वाक्पारुष्यादिभिश्चैव विज्ञयो निःप्रयोजनः ॥
समानेन प्रदातव्यं शशशृङ्गमयं धनुः ।
असम्भाव्यमसाध्यन्तु पक्षमाहु - र्मनीषिणः ॥
यस्मिन्नावेदिते पक्षो प्राड्विवाकेऽथ राजनि ।
पुरे राष्ट्रविरोधः स्याद्विरुद्धः सोऽभिधीयते" ॥

कुसीदाख्यैर्द्दशभिः वाक्पारुष्यादिभिरित्यत्र हीन इत्यनुषज्यते ।

तथा---"पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यति ॥
वहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कालं तदपि गृह्णीयाद्राजा तत्त्ववुभुत्सया" ॥

अनेकपदेति—अनेकक्रियाकव्यवहारविषयमेतत्तदाह—

कात्यायनः—"न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न्न चैकस्मिन् क्रियाद्वयम्" ॥

इदमपि न हेयम् किन्तु राज्ञा लेख्यमेव । निरूपणमस्य क्रमशः यत्र एकहेतुकैव नानासाध्यसिद्धिस्तत्र क्रमोऽपि न ।

कात्यायनः—"देशकालविहीनश्च द्रव्यसङ्ख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते" ॥

देशेति-यत्र देशादिभिरेव निर्णयस्तत्रैव तदुपयोगो न सर्वत्र । अन्यथाऽदृष्टार्थकतापत्तेरिति द्रष्टव्यम् ।

व्यासः—"पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत् ।
न्यूनाधिकन्तु संशोध्य पश्चात्पत्रे निवेशयेत्" ॥

फलकम्-काष्ठादिपट्टम् । तथा चादौ भूम्यादौ निवेश्य न्यूनाधिकं संशोध्य पत्रे लिखेदित्यर्थः ।

कात्यायनः-"अन्यदुक्तं लिखेदन्यद् योऽर्थिप्रत्यर्थिनां वचः ।
चौरवच्चासयेत्तन्तु धार्मिकः पृथिवीपतिः" ॥

अन्यदिति-अन्यथाकृत्वा लिखतश्चौरवद्दण्ड्या इत्यर्थः ।

इति व्यवहारचिन्तामणौ भाषापादः

अथोत्तरपादः

तत्र निर्दोषायां भाषायां सत्यां ज्ञाततदर्थेन उत्तरन्देयम् । तदाह--

बृहस्पतिः - "विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरन्ततः" ।।

विनिश्चिते-स्वरूपतोऽवधारिते ।

याज्ञवल्क्यः—"श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।
ततोऽर्थी लेखयेत सद्यः प्रतिज्ञातार्थसाधनम् ।।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा" ।।

श्रुतार्थस्य-भाषावचनस्य । पूर्वावेदको भाषिता । अर्थी-प्रतिवादी । सद्यः उत्तरलिखनानन्तरं प्रतिज्ञातः प्रत्यर्थिप्रतिज्ञातो योऽर्थः परिशोधितत्वा-दिस्तस्य साधनं साक्ष्यादिः । तत्सिद्धौ तस्य उपन्यस्तप्रमाणस्य सिद्धौ निर्वा-हने सिद्धिं विजयम् । अन्यथाऽनिर्वाहने विपरीतमविजयम्, भङ्गमिति मिताक्षरा ।

कात्यायनः - 'श्रुत्वा लेखयतो ह्यर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः ।।
सद्यो वैकाहपञ्चाहौ त्र्यहं वा गुरुलाघवात् ।
लभेदसौ त्रिपक्षं वा सप्ताहं वा ऋणादिषु" ।।

अत्र व्यवस्थामाह-

स एव –"सद्यः कृते सद्योवादः समातीते दिनं क्षिपेत् ।
षडाब्दिके त्रिरात्रन्तु सप्ताहं द्वादशाब्दिके ।।
विंशत्यब्दे दशाहन्तु मासार्द्धं वा लभेत सः ।
मासं त्रिंशत् समातीते त्रिपक्षं परतो लभेत् ।।
कालं शक्तिं विदित्वा तु कार्याणाञ्च बलाबलम् ।
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः" ।।

प्रभुरिह-विचारकः ।

बृहस्पतिः—"एकाह त्र्यह-पञ्चाह - सप्ताहं पञ्चमेव वा ।
मासं ऋतुत्रयं वापि लभते शक्त्यपेक्षया" ॥

सद्यो विषयं कियन्तमप्याह--

याज्ञवल्क्यः - "साहस-स्तेय-पारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः" ॥

गौरत्र-दोग्ध्री, गोत्वमुपलक्षणम् । यत्र कालात्ययेनभोगादिक्षति-स्तत्परम् । अत्यये-मरणे संभाव्यमाने । स्त्रियां कुलस्त्रियाञ्चारित्र्यविवादे, दास्यां वा स्वत्वविवादे । इदञ्च सप्तग्रहणम्, यत्र कालातिपाते प्रतिकूलं तत्परम् । तदाह-

कात्यायनः - "व्यपैति गौरवं यत्र विनाशस्त्याग एव वा ।
कालस्तत्र न कुर्य्यात्तु कार्यमात्ययिकं हि तत्" ॥

अन्यत्र-ऋणादौ । तदाह-

नारदः-"गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि ।
ऋणादिषु हरेत्कालं कालं तत्त्वबुभुत्सया ॥

याज्ञवल्क्यीयमपीच्छापदम् तत्त्वबुभुत्सापरमेव । हरेत् - हारयेत्, विचारक इति शेषः ।

व्यासः– "राजदैवकृतो दोषः तस्मिन्काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥
राजदैवकृतं दोषं साक्षिभिः प्रतिपादयेत् ।
जैह्म्येन वर्त्तमानस्तु दण्ड्यादाप्यश्च तद्धनम् ॥

अवध्यतिक्रमहेतौ राजदैवकस्य प्रमितौ नातिक्रमकोपराध्यति । जैह्म्यात्तु तदतिक्रामन् दण्डयो भङ्गी च भवतीत्यर्थः ।

कात्यायनः –"अभियुक्तोऽभियोक्तारं नाभियुञ्जीत कर्हिचित् ।

अन्यत्र दण्डपारुष्यस्तेय सङ्ग्रहणात्ययात्" ।।

दण्डादिषु पञ्चस्वपि ममाप्यनेन दण्डपारुष्यादिकं कृतमित्यभियोगो दातव्य एव तथैवाभियोगनिस्तारात् ।

याज्ञवल्क्यः—"अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं नचान्येन नोक्तं विप्रकृतिन्नयेत् ।।
कुर्यात्प्रत्यभियोगञ्च कलहे साहसेषु च" ।।

अन्येनाभियुक्तं नाभियुञ्जीत । विप्रकृतिमिति - आवेदनकालेऽन्यथा लेखयित्वा भाषालेखनकालेऽन्यथा न लेखयेदित्यर्थिषूपदेशद्वयम् ।

नारदः—"पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ।।"

पक्षस्य भाषितहेतोर्व्यापकमाच्छादकम् ।

तदुक्तम—"पूर्वपक्षार्थसम्बद्धं प्रतिपक्षं निवेशयेत् ।"

सारं प्रकृतोपयोगि । असन्दिग्धमुच्यमानं सन्निश्चीयमानम् अनाकुलम्-पूर्वापरविरोधरहितम् । अव्याख्यागम्यम्- अध्याहारादिकम्बिनैव प्रतीतम् । यद्यपि सम्प्रतिपत्तिरज्ञानादिकञ्चोत्तरं न भाषितहेत्वाच्छादकम् । तथापि तदभिसन्धिना प्रयुक्तमेवेति द्रष्टव्यम् । अतएव उत्तीर्य्यते निस्तीर्य्यते प्रकृताभियोगोऽनेनेत्युत्तरमिति प्राञ्चः ।

नव्यास्तु-पक्षस्य स्वप्रतिज्ञातस्याधार्य्यमाणत्वादेर्व्यापकं साधकमित्याहुः । पक्षस्य धार्य्यमाणत्वे साध्ये पक्षीकृतस्य ज्ञतस्य व्यापकमभिव्यापकम् । तथा चार्द्धमत्रागृहीतमर्द्धञ्च परिशोधितमिति मिथ्याकारणघटितमुत्तरं पक्षाभिव्यापकत्वात्संगृह्यत एवेत्यन्ये । अत्र चैतादृशार्थकं वचनमुत्तरम् , तदेव चातुर्विध्येन विभजते ।

कात्यायनः—"सत्यम्मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनन्तथा ।
पूर्वन्यायविधिश्चैव उत्तरं स्याच्चतुर्विधम् ।।"

व्यासः - "साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता।
कारणं स्यादवस्कन्दो मिथ्या स्यात्साध्यनिह्नुतिः॥"

साध्यस्य भाषितस्य सहेतुसाध्यस्य कण्ठतोऽर्थतो वा निह्नवो मिथ्योत्तरम्, केवलसाध्यस्य संप्रतिपत्तिभिन्नेषु त्रिष्वप्युत्तरेषु निह्नवः समान इति द्रष्टव्यम्।

बृहस्पतिः-- "मिथ्यायान्तु चतुष्पादः प्रत्यवस्कन्दने तथा।
प्रतिमा यश्च विज्ञेयो द्विपात्सम्प्रतिपत्तिषु॥"

अथ संप्रतिपत्तिः---

"अनुज्ञाकारणं यत्र पक्षं वादी प्रपद्यते।
प्रतिपत्तिस्तु सा ज्ञेया कारणे दूषणं पृथक्॥"

कारणं परहेतुदूषणकारणम्। वादी प्रत्यर्थीकारणे कारणोत्तरे पृथग्दूषणं भवेदित्यर्थः। संप्रतिपत्तिश्च सिद्धसाधनमुत्पादयन्ती सदुत्तरम्। नचैवं भाषितुं निर्ग्रहः। विचारस्यास्य तत्त्वनिर्णयार्थत्वात्, तत्र च सिद्धसाधनस्यादोषत्वादिति। अत्र च न क्रियापादो नापि जयपराजयावधारण-लक्षणप्रत्याकलितपादा इति द्विपादेव व्यवहार इति सुष्ठुक्तं द्विपात्संप्रति-पत्तिष्विति।

## अथ मिथ्योत्तरम्

कात्यायनः--"अभियुक्तोऽभियोगस्य यदि कुर्य्यादपह्नवम्।
मिथ्या तत्तु विजानीयादुभयं व्यवहारतः॥"

अभियोगो हेतुर्गृहीतत्वादिः। ते हेत्वपलाप एव मिथ्योत्तरमिति तु सारम्।

व्यासः-- "मिथ्यै तन्नाभिजानामि मम तत्र न सन्निधिः।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम्॥"

अत्र सिद्ध्यैतदिति कण्ठतो न जानामीत्यादिकं त्रिकमर्थतोपह्नवः। तदाह—

कात्यायनः—"श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति।
अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम्॥"

भाषार्थं सहेतुसाध्यम्। अत्र च साध्यापह्नवोक्तिरुत्तरान्तरव्यवच्छेदद्वारा मिथ्योत्तरलक्षणोपयुक्ताहेत्वपह्नव एव स्वरूपासिद्धिकपक्षस्थापनादोष इति विवेक्तव्यम्। तत्र गृहीतत्वात्त्वं धारयसीति भाषायां न गृहीतमिति शब्दतः कालविशेषगर्भायां तस्यास्तदा नाहं जात इत्यर्थतः देशकालविशेषगर्भायां तदा तत्र नाहमासमित्यर्थतः।

देशादिमत्यां तच्छन्यायां बा तस्यां नहि जानामीत्यर्थ तएव योग्यास्मरणेनार्थतः तद्ग्रहणस्य प्रतिपादनात्। अत्र च चरमत्रयं ग्रहणास्कन्द मुखेन ग्रहणाभावप्रतिपादकं सापदेशमिथ्योत्तरमित्युच्यते। आद्यं मिथ्योत्तरमात्रम्। न जानामीति तु सापदेशमिथ्योत्तरमभिमानमात्रात् षोडशन्तु द्वयं व्याप्ततया सम्यक्।

नचैवम् समीचोर्ग्रहणास्कन्दकयोरसन्निधानाजन्मनोरेव प्रतिपाद्यता स्यादिति वाच्यम्, तस्याभावरूपतया ग्रहणापेक्षया प्रतिपादनगौरवात्, ताभ्याञ्चाग्रहणस्य व्यापकानुपलब्ध्या प्रत्यायनेऽपि गौरवात्। प्रत्यायनाशक्तावपि संशयतादवस्थ्याच्च। नहि तदा जातस्तत्र च स न गृह्णात्येवेति नियमः। धर्मव्यवहारे च छलमवश्य निरस्यम्। तस्माच्चतुर्ष्वपि मिथ्योत्तरेषु स्थापकेनैव दृष्टेन ग्रहणं प्रमापणीयमिति।

यत्तु पितागृहीतत्वभाषायां तद्ग्रहणाधिकरणत्वेनाभिमतकालापेक्षया चरमजातस्य तत्पुत्रस्य न जानामीत्यादिकमुत्तरम्, तदुत्तरप्रतिरूपकार्थतोऽपि स्थापितहेत्वपह्नवासम्भवात्। नचैवमुत्तराभासादेव तत्र स्थापकस्य जय इति वाच्यम्। धर्मव्यवहारे छलस्यावश्यनिरस्यत्वेन तत्र स्थापकेन ग्रहणस्यावश्यप्रमापणीयत्वात्। अतएव प्रकाशक्रये नास्तिकेनादत्तत्वादिकमपि प्रमापणीयमिति स्मरन्ति।

अन्यथा दत्तत्वादेर्दूषकेनानुक्तत्वाद्दत्तत्वादिप्रतिपादनं तत्राधिकं स्यात्। तेन च दत्तत्वाद्यभिधाने तेनैव तत्प्रतिपाद्यमित्यपि स्यात्। नास्तिकोत्ततत्स्वत्वाद्यास्कन्दकत्वाद्दत्तत्वादेरिति कारणोत्तरञ्चापरं कारणं स्थापकसाध्यस्य धार्यमाणत्वस्य ध्वंसकारणं निर्यातनादितद्रूपम्। अतएव मिथ्योत्तरादस्य भेदः। तद्धि धार्यमानत्वस्याभावप्रयोजकमग्रहणम्। नतु ध्वंसकम्, कदाप्यधारितत्वात्।

अतएव प्राङ्न्यायादप्यस्य भेदः प्राङ्न्यायो हि धार्यमाणत्वस्य सामान्याभावप्रतिपादक इति। तच्च त्रिविधम्। पूर्ववाद्युक्तहेत्वपेक्षयाऽधिकबलं समबलं न्यूनबलञ्चेति। तत्राद्यं प्रत्यवस्कन्दनम्, तदाह---

बृहस्पतिः—"अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा।
प्रपद्यकारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत्॥"

अर्थिनोक्तं गृहीतत्वहेतुं सत्यमित्युपगम्य यदीदानीमधार्यमाणत्वे परिशोधित्वादिकं कारणं ब्रूयात्तदा यदुत्तरं प्रत्यवस्कन्दनं भवतीत्यर्थः। तदा-मया त्वत्तः शतं गृहीतमिति सत्यम्, किन्तु परिशोधितमिति। इदञ्च त्वं मह्यमिदानीं शतस्य धारय। मत्तः प्रतिदेयतया गृहीततावद्धनकत्वादिति भाषायां निर्यातनस्थले व्यभिचारवारणायापरिशोधितेति हेतौ विशेषणं स्थापकस्य हृदिस्थम्, तस्य चासिद्धिरुत्तरवाक्यार्थः। तथा च हेतुविशेषणासिद्धिपरमिदं कारणोत्तरम्।

कात्यायनः—"अर्थिनाभिहितो योर्थः प्रत्यर्थी यदि तं तथा।
प्रपद्यकारण ब्रूयादाधर्यं भृगुरब्रवीत्॥"

आधर्यं - दुर्बलत्वम्, पूर्वपक्षस्येति शेषः।

नारदः—"आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्।
विवादे साक्षिणस्तत्र द्रष्टव्याः प्रतिवादिनः॥"

प्रदीपकृतस्तु कारणं धार्यमाणत्वे कारणं गृहीतत्वम्। तत्प्रपद्याभ्युपेत्य ब्रूयात्, परिशोधनादिकमिति शेषः। इत्येवं क्रमेण योजनामर्थादाहुः। अपरिशोधितत्वञ्च स्थापनाहेतुविशेषणञ्च कण्ठरवेणोक्तमित्याहुः।

केचित्तु पूर्वपक्षस्थापनाहेतुं प्रतीत्य यत्तद्विपरीतवचने तत्कारणोत्तरमिति त्रितयपरमेवेदं वाक्यमित्याहुस्तन्न। समहीनबलकारणोत्तरयोः स्थापनाया आधर्यासम्भवेनैतद्वाक्यस्य तदुभयाविषयकत्वादिति।

वस्तुतस्तु त्वद्धनं मत्साधारणं मदविभक्तार्जितत्वादित्यत्र नैतदेवम्। त्वद्विभक्त-मदर्जितत्वादित्यत्र बलवत्कारणोत्तरे कण्ठोक्तस्य विभक्तत्वस्य खण्डनात्। अभियोगध्वंसस्य चाजननान्न प्राचीना व्याख्या। किन्तु पूर्वपक्षाभ्युपेत्य भाषितहेतुं विशेष्यमात्रं कारणमनभियोज्यता प्रयोजकरूपं विभक्तत्वनिर्यातितत्वादि यद्ब्रूते तद्बलबलात्कारणोत्तरमिति व्याख्या ज्यायसीति।

समबलन्तु मदीयेयं भूः क्रमागतत्वादिति भाषायामिदमवोत्तरम्। इदञ्च सत्प्रतिपक्षतत्वपरम्। दुर्बलत्वञ्च विंशतिवर्षादारभ्यममेयमाधिविषयो भूः तावत्समयादारभ्य स्वामिना मय्याहितत्वादिति भाषायां पञ्चवर्षादारभ्य सा मदीया पञ्चमेऽब्दे तेन मय्याहितत्वादिति। इदमपि सत्प्रतिपक्षत्वपरम्।

आदौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरा इति वचनप्रामाण्याच्च दुर्बलत्वम्। अत्र च बलवति प्रतिवादिनः। अन्त्ययोस्तु स्थापकस्य प्रमाणमनुसन्धेयम्।

तदुक्तम्--"गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत्।
दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव च ॥"

इति पूर्वेति--पूर्वोत्तरयोः साक्षिसाम्ये एव।

कात्यायनः--"कारणात्पूर्वपक्षोऽपि उत्तरं प्रतिपद्यते।
अतः क्रिया सदा ग्राह्या पूर्वपक्षप्रसाधनी ॥"

कारणात्--बलवत्त्वात्, उत्तरत्वम्-उत्तमत्वम्। प्राङ्न्यायोत्तरन्त्वस्मिन्नर्थे मयायं पूर्वं जित इत्येवं रूपम्। यदाह--

बृहस्पतिः-- "आचारेणावसन्नोऽपि पुनर्लेखयते यदि।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥"

आचारेण व्यवहारेण अवसन्नो भङ्गी लेखयते भाषाम्। अत्र चोत्तरवादिन एव क्रिया तेनैव पूर्वजयस्य विभावनीयत्वात्। तथा च—

हारीतः - "प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी निर्दिशेत् क्रिया।
मिथ्योक्तौ पूर्ववादात्तु प्रतिपत्तौ न सा भवेत् ॥"

कारणोक्तौ-- बलवत्कारणोक्तौ। अत्र च प्राङ्न्याये बलवत्पूर्वप्रमाण-बाधः स्थापनाहेतुदोषः। निर्णीतत्वेन संशयाभावादसिद्धिरित्यन्ये।

## अथोत्तरा भाषाः

**कात्यायनः**-- "पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्।
मिथ्या चैवैकदेशे स्यात् सङ्करात्तदनुत्तरम् ॥"

अत्र केचित् यथा शतग्रहणे भाषिते पञ्चशतन्धारयाम्येव पञ्चविंशतिर्न्निस्तीर्णाः पञ्चविंशतिर्न्न गृहीता इत्याद्युदाहरणम्, अत्र कात्यायनवचनं बीजम्।

तथाहि-- 'नचैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः।
नचार्थिसिद्धिरुभयोर्न्न चैकस्मिन् क्रियाद्वयम् ॥" इति।

एकत्र द्वयोर्वादिनोर्न क्रियाद्वयी न क्रियाद्वयोश्च, न जय इति वाक्यार्थः। यथोक्तकर्त्तोत्तरस्य च ग्राह्यत्वे तत्सर्वं प्रसज्येतेत्याहुः। तन्मन्दम्, नहीदृशो विषय एव न सम्भवति वहुशो दर्शनात्, नहीदृशमुत्तरं न देयम्। यथावस्थितार्थोत्तरदानस्य निषेद्धुमशक्यत्वात्। नच सकल एवाक्षेपे मिथ्योत्तरमेव कार्यम्, शतस्यागृहीतत्वादिति वाच्यम्। नहि विज्ञा एव विवदन्ते किन्त्वज्ञा अपि, नच तेऽपि पर्यनुयोज्याः।

किन्तु तद्वतो विकल्पः-- "छलं निरस्य भूतेन व्यवहारान्नयेन् नृपः" इत्यादिवचनात्। किञ्च सदुत्तरान्तरं सम्भवतीत्यत एवास्य न हेयतोपायान्तरस्य उपायान्तरादूषकत्वात्। नच वचनादेवास्य हेयता, एतद्वचनस्यादृष्टार्थतापत्तेः।

अपि च शतं न गृहीतमित्यस्य नाग्रहणमर्थं, शतपदानर्थक्यापत्तेः। नापि शतावग्रहणं विशेषनिषेधे शेषाभ्यनुज्ञापत्तेः। नापि शतपदं पक्ष-

प्राप्तार्थवादः। एवमेकदेशस्य गृहीतस्य गृहीतत्वविभावनादेव स्थापको निरपवादमेव तावद्धनं लभेतेत्यनिष्टफलकमुत्तरं स्यात्। तस्मादेकदेशे एकस्मिन्नेव देशे यदुक्तं सङ्कीर्यते तदनुत्तरं शेषमेकदेशपदद्वयञ्चानुवादः। तथा हि मया शतन्न गृहीतम्, गृहीतं वा परिशोधितं धारयाम्येव नेत्यादि।

यत्तु भिन्नभिन्नाच्छेदेन कारणादिस्पर्शि तत्सदुत्तरमेव, अवच्छेदभेदेने साङ्कर्यस्यैवाभावात्। अत्रैव हारीतेनापि मीमांसितम्—

> "मिथ्योत्तरं कारणञ्च स्यातामेकत्र चेदुभे।
> सत्यञ्चापि सहानेन तत्र ग्राह्यं किमुत्तरम्॥
> यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम्।
> उत्तरन्तत्तु विज्ञेयमसङ्कीर्णमतोऽन्यथा" ॥

यदिति प्रचरांशविषयकमुत्तरमादाय विचार उपक्रमणीयः। तुल्यार्थविषयत्वे तु यत्र क्रियाया भुक्त्यादेः फलनिर्णयः शीघ्रं भवति तदंशस्यैव प्रमाणं ग्राह्यम्। तदुक्तम् "यत्र वा स्यात् क्रियाफलमिति"। इदञ्चोत्तरमसङ्कीर्णमेव, यदितोन्यथा तत्सङ्कीर्णम् तत्वतो हेयमिति तदयं वर्त्तुलार्थः।

सप्ततियोगे पञ्चाशत्परिशोधिताः पञ्चविंशतिर्द्धार्य्यन्ते पञ्चविंशतिस्तु न गृहीता इत्यादौ कारणभाग आदौ विचारणीयः।

नचैवं सत्येतद्वचनविरोध एव वचनानामुत्सर्गतो न्यायमूलकत्वेनैतद्वचनस्यापि न व्यर्थप्रमाणपरिग्रहाबाधकत्वात्। सति च निर्णयप्रमाणे तदंशेऽपि प्रकरणारम्भमसंशयस्य निरस्यत्वात्। नच - यत् प्रभूतार्थ विषयमित्यादि वचनबलादेव मन्त्रर्थप्रमाणाग्राह्यता, तथा सत्येतत् स्मृतीनां श्रुतिमूलकतापत्तेः। नचैतदिदमेव असम्भवन्मूलान्तरत्वस्य तत्र प्रयोजकत्वात्। यूपहस्त्यादिस्मृतौ तथा सिद्धान्तात्, आसाञ्च न्यायमूलकत्वस्यैव सम्भवात् "मिथ्याकारणसम्भेदे ग्राह्यं कारणमुत्तरम्" इत्यादिकमपि वचनमेवमेव नेयम्। तस्माद्यावत्प्रकरणारम्भकमशयोनुवर्त्तते, निर्णायकञ्च प्रमाणं लभ्यते तावद्विचारणीयमिति परमार्थः। भवदेवप्रदीपादयोप्येवम्।

कात्यायनः– "प्रकृतेन त्वसम्बन्ध - मत्यल्पमति - भूरि च ।
पक्षैकदेशव्याप्यैव तत्तु अस्योत्तरं भवेत् ॥
असम्बन्धपदव्यापि निगूढार्थन्तथा - कुलम् ।
व्याख्यागम्यमसारञ्च नोत्तरं शस्यते बुधैः" ॥

प्रकृतेन--प्रकृतभाषया । अत्यल्प प्रतिज्ञामात्रं न धारयामीत्यादि । अतिभूरि वहुहेतुकञ्च । पक्षैकदशव्यापि – भाषितैकदेशाच्छादकम् । असम्बन्धपदव्यापि-अनन्वितार्थकपदव्याप्तम् । निगूढार्थमप्रसिद्धार्थम् । अकुलम् परस्परविरुद्धार्थकम् । व्याख्यागम्यम् - लक्षणादिना विवक्षितार्थबोधकम् । असारम्-मन्यूत्तरम् ।

तथा "प्रपद्यकारणं पूर्वमन्यद् गुरुतरं यदि ।
प्रतिवाक्यगतं ब्रूयात् साध्यते तद्धि नेतरत्" ॥

आदौ लघुकारणमभिधाय पश्चाद्बलवदभिदधतस्तद्बलवदेव ग्राह्यम् । तत्वनिर्णयार्थमित्यर्थः ।

बृहस्पतिः—"पूर्वपक्षे यथार्थन्तु न दद्यादुत्तरन्तु यः ।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः ॥
प्रियपूर्वं वचः साम भेदस्तु भयदर्शनम् ।
अर्थापकर्षणन्दण्डः ताडनं बन्धनन्तथा ॥
उपायैर्दयमानन्तु न दद्यादुत्तरन्तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥
उन्मत्तमत्तानिर्धूता महापातकदूषिताः ।
जडातिवृद्धबालाश्च विज्ञेयास्ते निरुत्तराः" ॥

पूर्वपक्ष इति-उत्तरदानशक्तः मनसामादि पृष्टो यः सप्तरात्रपर्यन्तेनापि नोत्तरन्ददाति स भङ्गी व्यवहर्त्तव्यः । उन्मत्तादयस्तु सुज्ञपरद्वारेणोत्तरं दापयितव्य इत्यर्थः ।

"उभयोर्निखिले कार्ये प्रारब्धे तत्त्वनिर्णये ।
अयुक्तं तत्र यो ब्रूयात् स तदर्थात्तु हीयते ॥

पूर्वोत्तरे निविष्टे तु विचारे संप्रवेशते ।
निर्णिक्तन्तु तयोस्तत्र वचनं वादिनोर्द्वयोः ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतंवापि तद् ग्राह्यमुभयोरपि ॥
श्रुतञ्च लिखितञ्चैव चिन्तितं तु विशोधितम् ।
प्रथमेऽहनि तस्यैव विवादविधि कथ्यते" ॥

पूर्वोत्तरे भाषायामुत्तरे च संवृत्ते विचारे प्रारब्धे वादिनोर्वचनं निर्णिक्तं शोधितं ग्राह्यम् । तदेव प्रपञ्चयति मोहादित्यादि । शाठ्यम् - तात्कालिकवाक्स्तम्भादि । एवञ्च विचारप्रवृत्तिपूर्वभाषोत्तरयोः शोधने सिद्धे "प्रतिज्ञां पूरयेद्वादी यावन्नोत्तरदर्शन" मित्यत्राप्युत्तरपदं विचारारम्भपरमित्यवगन्तव्यम् ।

इति व्यवहारचिन्तामणौ उत्तरपादः

## अथ क्रियापादः

तत्रोत्तराभासे क्रियानपेक्ष एव भङ्गः । सदुत्तरे तु क्रिया देया । तत्र

याज्ञवल्क्यः - "ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा" ॥

अर्थी-वादी प्रतिवादी च । सद्य इति, तेन प्रमाणनिर्द्देशे प्रमाणप्रवर्त्तने च न कालातिपातः कार्य इत्यर्थः । तदाह-

कात्यायनः - "कालस्य हरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः" ॥

साक्षिणामुपन्यासे निगदने च विलम्बो न कार्योऽन्यथा साक्षिकरणसाक्षिसन्धानादिना धर्मलोपापत्तिरित्यर्थः । क्रिया च द्विविधा । तदाह-

बृहस्पतिः - "द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना ऋषिभिस्तत्त्वदर्शिभिः ॥

साक्षिलेखानुसारञ्च मानुषी त्रिविधा मता।
घटाद्या धर्मजान्ता च दैविकी नवधा स्मृता'' ॥

लेखो भोगस्याप्युपलक्षणम्। धर्मजान्ताश्च नवाप्यनेनैव वक्ष्यन्ते। अत्र दैविकी द्वेधा, शपथ-दिव्यभेदात्।

बृहस्पतिः - ''सत्यं वाहनशस्त्राणि गोबीजं काञ्चनानि च।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥
एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकरास्तथा।
साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम्'' ॥

हलायुधेन तु - दिव्यशपथयोरभेद एव प्रतिपादितः।

कात्यायनः - ''यद्येको मानुषीं ब्रूयादन्यो ब्रूयाच्च दैविकीम्।
मानुषीन्तत्र गृह्णीयान्न तु दैवीं कदाचन ॥
यद्येकदेशव्याप्तोऽपि क्रिया विद्येत मानुषी।
सा ग्राह्या नतु पूर्णापि दैविकी वदतां नृणाम् ॥''

एकदेशव्याप्तापीति स्तुतिर्वा अर्थान्तरव्याप्तैकदेशविषयकं वा, एकदेशविभावनेऽपि सर्वं दद्यामिति पणबन्धविषयक वा क्रिया न दैविकी ग्राह्या। विद्यमानेषु साक्षिषु— ''लेख्ये सति च वादेषु न स्याद्दिव्यं न साक्षिणः।''

तथा - ''अनेकार्थाभियोगे तु यावत्संसाधयेद्धनी।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥''

वस्तूनां यत्रान्योन्यं विना भावो नास्ति तद्विषयमिदम।

व्यासः - ''प्राङ्न्यायकारणोक्ते तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत्।
मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनः।
प्राङ्न्यायविधिसिद्धौ च जयपत्रं विनिर्दिशेत् ॥''

मिथ्योत्तरे सति पूर्ववादिनः क्रिया, साच मानुषी ग्राह्या। न गृहीतं मयेत्यत्र हि प्रत्यर्थिनः सा न भवतीति न्यायोऽत्र मूलम्।

नचाभावो न बोध्यत इत्यतोऽत्रापि भावस्यैव बोध्यत अभिशापेऽभावस्यैव परीक्षणात्। एतेन सुकरत्वात् प्रथमोपस्थितत्वाच्च भावबोधनमित्यपास्तम्।

नच क्रियापदं यावदर्थकम्, प्राङ्न्यायकारणयोरन्वीयते तावदर्थकमेव मिथ्योत्तरेऽप्यनुषज्यते। तेन मिथ्योत्तरेऽप्यर्थिन एवादृष्टमपीति वाच्यम्। श्रूयमाणशब्दे पुनरन्वयमात्रमेव ह्यनुषङ्गो नत्वर्थावैषम्य सहितम्, गौरवात्। तदभावे दैवी, तदाह---

याज्ञवल्क्यः---"प्रमाणं लिखितं भुक्ति साक्षिणश्चेति कीर्त्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥
न कश्चिदभियोक्तारं पुनर्द्दिव्ये नियोजयेत।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥"

इति वाक्यस्य दिव्यप्राप्तौ पूर्वार्द्धेनाभियोक्तुस्तन्निषेधेऽर्थतोऽभियोज्यस्य तद्विधावुत्तरार्द्धेन तन्नियमात्। सिद्धे सत्यारम्भस्य नियमार्थत्वात्। तस्य तु सन्दिहानत्वे पापित्वे वा तच्छून्यस्यार्थिन एवानन्यगतिकत्वात्। शौचनिश्चययोस्तौल्य इत्यमरः। कुर्यादिति वचनादिच्छातौल्ये प्रत्यर्थिन एव, अभियुक्तायेत्यादि वचनबलादेवेति सङ्क्षेपः।

बलवत्कारणोत्तरे तु प्रतिवादिन एव क्रियेत्याह---

कात्यायनः---"प्रपद्यकारणं पूर्वमन्यद् गुरुतरं यदि।
प्रतिवाक्यगतं ब्रूयात् साध्यते तद्धि नेतरत् ॥"

धार्य्यमाणत्वस्य कारणमृणग्रहणं भाषितमभ्युपेत्य तदा दृष्टादृष्टरूपा क्रिया प्रतिवादिन एव भवति। यद्येको मानुषी ब्रूयादित्यादिकं समबलकारणोत्तरविषयं सपणविवादविषयकं वेति समुदायार्थः। धार्यनिमित्तमुत्तरवाक्यगतं यदि गुरुतरं कारणं परिशोधनादिकं ब्रूयात्तदा प्रतिवादिना तत्साध्यते नत्वितरत्। समबलमल्पबलंऽवेत्यर्थः।

तथा--- “अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा।
प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत्॥”

कारणं·· भाषितस्य बाधकारणम्, आधर्यं पूर्वपक्षस्येति शेषः।

नारदः—“आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्।
विवादे साक्षिणस्तत्र द्रष्टव्याः पूर्ववादिनः॥”

साक्षिण इति दृष्टादृष्टक्रियोपलक्षणम्। समबलकारणाभिधाने तु पूर्ववादिन एव क्रियेत्याह—

नारदः—“द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु।
पूर्ववादो भवेद्यस्य भवेयुस्तस्य साक्षिणः॥”

याज्ञवल्क्यः--- “साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः।
पूर्वपक्षे वरीभूते भवन्त्युत्तरवादिनः॥”

इदञ्चोभयवादिसाक्षिणां सर्वथा साम्ये। नच समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेदिति कात्यायनवचनेन सह विरोधस्तस्यान्यविषयकत्वात्। तथा हि यत्रैकतरस्य वादिनः साक्षिणां परस्परविरुद्धं निगदतां निगदनान्न संशयोच्छेदस्तत्रादृष्टेश्च निर्णयः कार्य्य इति तदर्थं इति। वैषम्ये तु--

कात्यायनः-- “साक्षिद्वैधे प्रभूतास्तु ग्राह्याः साम्ये गुणाधिकाः।
गुणिद्वैधे क्रियायुक्तास्तत्साम्ये शुचिनोत्तराः॥
क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु।
लेख्ये सति च वादेषु न स्याद्दिव्यं न साक्षिणः॥”

एवं प्राङ्न्यायेऽपि प्रतिवादिनः क्रियामाह-

व्यासः- “प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा।
सत्यवादी समाप्नोति यद्युक्तेन निवेदितम्॥”

बृहस्पतिः- "प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणन्तथा ।
प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् ।।"

प्रतिज्ञामिति-- प्रतिज्ञाहेतुम् । गृहीतत्वादिकं प्रत्यर्थापह्नुतमर्थी दृष्टेन साधयेदित्यर्थः । कारणम्--बलवत्कारणम् , प्रत्यर्थी दृष्टादृष्टेन भावयेत् ।

अथ प्रसङ्गाज्जयपत्रलक्षणम

कात्यायनः--"अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक् तथा ।
निर्णयश्च यथा तस्य यथाचारधृतं स्वयम् ।।
एतद्यथाक्षरं लेख्यं यथापूर्वं निवेशयेत् ।
सभासदश्च ये तत्र धर्मशास्त्रविदस्तथा ।।"

बृहस्पतिः--"यद्वृत्त व्यवहारात्तु पूर्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ।।
पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रन्तदुच्यते ।।"

वशिष्ठः---"यथोपन्यस्तसाध्यार्थसंयुतं सोत्तरक्रियाम् ।
सावधारणकञ्चैव जयपत्रकमुच्यते ।
प्राड्विवाकादिमुद्राङ्कं मुद्रितं राजमुद्रया ।।"

तथा--- "निरस्ता तु क्रिया यत्र प्रमाणे वैरवादिना ।
पश्चात्कारो भवेत्तत्र स सर्वासु विधीयते ।।"

पश्चात्क्रियत इति पश्चात्कारो जयपत्रम् । यत्र वादिवाक्यपर्यालोचनया जयावधारणम् । तत्रैव जयपत्रमन्यत्रेति । केचित्तु न पूर्वजयविभावनस्यान्यत्रापि कृतयत्वेन जयपत्रस्यान्यत्रापि न्यायतः प्राप्तेरिति । भाषोत्तरे क्रिया च साक्ष्यादिरूपा निर्णयश्च जयपराजयावधारणम् निर्णयकालावस्थितामध्यस्थाश्चेत्यादि सर्वं लेखनीयम् ।

निर्णयस्य सम्यक्त्वप्रदर्शनार्थं भाषोत्तरलिखनं च हेत्वन्तरेण पुनर्भाषे

प्रत्यवस्थाननिरासार्थम्। नहि न गृहीतं मयेति मिथ्योत्तरेण जितस्य पुनः परिशोधितं मयेति प्रत्यवस्थानं सम्भवति। तदाह—

कात्यायनः— "क्रियां बलवतीं त्यक्त्वा दुर्बलां योऽवलम्बते।
स जयेवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम्॥
निर्णीते व्यवहारे तु प्रमाणमफलं भवेत्।
लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत्॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः।
निर्णीतव्यवहाराणां प्रमाणमफलन्तथा॥"

त्यक्त्वेति बुद्धिपूर्वकत्यागावगतेस्तत्र क्रियान्तरालाभः।

## अथ ग्राह्यक्रियानिरूपणम्

कात्यायनः— "अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं गुरु।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी॥"

अनुमानं प्रत्याकलितम्। तदाह—

मनुः— "वाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषः चेष्टितेन च॥

स्वरो विकृतो गन्धादिः, वर्णोऽप्यस्वाभाविकः। इङ्गितम्-स्वेदवेपथुरोगाञ्चादि। चक्षुषा कातरेण चेष्टितेन स्थानत्यागादिना। एषाञ्चानन्यथासिद्धेरतिदुर्निरूपत्वादेभ्यः साक्षी बलवानित्यर्थः।

तथा— "ब्रूहीत्युक्तश्च न ब्रूयादुक्तञ्च न विभावयेत्।
नच पूर्वापरं विद्यात्तस्मादर्थात्स हीयते॥
सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्नयः।
धर्मस्थः कारणैरेतैर्हीनन्तमपि निर्दिशेत्॥
अभियोक्ता नचेद्ब्रूयाद्बध्यो दण्डश्च धर्मतः।
नचेत् त्रिपक्षाद्ब्रूयात्स धर्मं प्रति पराजितः॥"

धर्मस्थो—विचारकः, हीनं सम्भावितहानिं, पराजित इति भङ्गानन्यथासिद्धेरतिनिपुणेनावधारणे स पराजितो व्यवहार्य इत्यर्थः।

"न परेण समुद्दिष्टमुपेयात् साक्षिणोरहः।
भेदयेच्चैव नान्येन हीयेच्चैवं समाचरन्॥
पलायते ह्यभियुक्तश्च मौनी साक्षिपराजितः।
स्वयं वाऽभ्युत्पन्नश्च अवसन्नश्चतुर्विधः॥
अन्यवादी क्रियान्वेषी नोपस्थायी निरुत्तरः।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः॥"

उपेयादुपजापार्थमिति शेषः। अन्येन-दूतादिना। पलायत इत्यत्रावसन्नचतुष्टयमध्ये आद्यौ सम्भावितभङ्गौ, अन्त्यौ निर्णीतभङ्गौ।

कात्यायनः—"लेखयित्वा तु यो वाक्यं न्यूनमप्यधिकं पुनः।
वदेन्वादी स हीयेत नाभियोगन्तु सोऽर्हति॥"

एतच्च पूरणसमयातिक्रमे ज्ञेयम्।

वृहस्पतिः—"साक्षिणस्तु समुद्दिश्य यस्तु तां न निगादयेत्।
त्रिंशद्रात्राणि पक्षाद्वा हानिस्तस्योपजायते॥"

अत्र कार्यगौरवलाघवाभ्यां समयविकल्पः।

नारदः—"सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति।
पशुस्त्रीभूमृणादाने साम्योप्यर्थान्न हीयते॥"

पश्वादिविवादे हानिहेतुभिः शाम्यमापन्नोपि न हीयते, न पराजित इत्यर्थः।

वृहस्पतिः—"आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम्।
नोपस्थितो भवेद्वादी छलन्तत्र न कारयेत्॥
दैवराजकृतो दोषस्तस्मिन्काले यदा भवेत्।
अवधित्यागमात्रेण न भवेत्स पराजितः॥"

आचारो-व्यवहारः, छलं पराजयम्, दैवेति अनुदण्डानेभङ्गभङ्गीकृत्यापि दैवादेरनुपस्थितस्य न भङ्ग इत्यर्थः।

तथा— "पूर्वोत्तरे निविष्टे तु विचारे संप्रवर्त्तिते।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दलम्।।"

ये वादिनो विचारमारुह्य परस्परं न समाचरन्ति ते विवादपदाद्द्विगुणन्दण्ड्याः। एतच्चानुमानमति पुनस्तेयवेद्यतया न सकलाकलनीयमतो दुर्बलम्। ततोऽपि दिव्यं दुर्बलम्। तदाह--

कात्यायनः-- प्रमाणैर्हेतुना वाऽपि दिव्येनैव तु निर्णयम्।
सर्वेष्वेव विवादेषु सदा कुर्यान्नराधिपः।।
पूर्वाभावे तु यत्नेन नान्यथैव कदाचन।"

प्रमाणैः भुक्तिलिखितसाक्षिभिर्हेतुनाऽनुमानेन। एवञ्च बृहस्पतिलिखितसाक्ष्यनुमानदिव्यानां पर्वंपूर्वंबलवदुत्तरोत्तरमबलमिति पूर्वालाभेनोत्तरादर इत्यर्थः।

कात्यायनः- "लिखितं साक्षिणो भुक्तिः प्रमाण त्रिविध स्मृतम्।
लेसोद्देशस्तु युक्तिश्च दिव्यानीह विषादयः।।
ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोपि वा।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया।।"

लेशोऽन्यथानुपन्नो धर्मः। तस्योद्देशं- परामर्शः। तेन परामृश्यमाणोऽन्यथानुपपन्नो धर्म इत्यर्थः।

पितामहः- "स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्।
साक्षिभिर्लिखितेनाथ भुक्त्या वा तान् प्रसाधयेत्।।"

इदन्तु साक्ष्यादीनामत्र प्रायिकतया तदादरणार्थं तदभावे दिव्यमपि कार्य्यमन्यथा सन्देहतादवस्थ्यात्।

**कात्यायनः**-- "वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत्।
दत्वाऽदत्ते तथाऽदत्तो स्वामिनां निर्णये सति ॥
विक्रीत्वादानसम्बन्धे क्रीत्वा धनमनिच्छति।
द्यूते समाहृयेच्चैव विवादे समुपस्थिते ॥
साक्षिणः साधनं प्रोक्तं न द्रव्यं नच लेख्यकम्।
पुरश्रेणिगणानाञ्च या स्थितिः परिकल्पिता ॥
तस्यास्तु साधनं लेख्यं न दिव्यं नच साक्षिणः।
द्वारमार्गक्रियाभोग -- जलवाहादिके तथा ॥
भक्तिरेव तु गुर्वी स्यान्न लेख्यं नच साक्षिणः।
एकान्ते साहसे वादे पारुष्ये दण्डवाचिके ॥
बलोद्धृतेषु कार्येषु साक्षिणो दिव्यमेव वा।"

दत्वाऽदत्त इति दातुं प्रतिश्रुत्या नार्पिते। तथा दत्ते दत्वा पुनराच्छिद्य गृहीते स्वामिनां निर्णये सत्येतत्स्वामिकमेतदिति निर्णये सति दत्तादत्तादिविवादे साक्षिणः प्रमाणं न दिव्यन्नच लेख्य इति सम्बन्धः। धनम्—मूलधनम्, अनिच्छति, दातुमिति शेषः। द्वारक्रिया—द्वारेण जलनिस्सरणक्रिया। मार्गक्रिया—मार्गेण गवादीनां निस्सरणादिक्रिया। भोगो—भोग्यम् क्षेत्रादि। जलवाहो—जलनिर्गममार्गः। आदिपदादुत्करादिसंग्रहः। एषु भक्तिर्गुर्वी।

**पितामहः**— "यस्मिन्यस्मिन् विवादे तु साक्षिणां नास्ति सम्भवः।
साहसेषु च सर्वेषु तत्र दिव्यानि दापयेत् ॥"

साहसेषु—प्राणान्तिकदण्डार्हेषु। तथा च—

**कात्यायनः**—"समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत्।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥"

दृष्टिसाम्ये यत्र च भङ्गपक्षे प्राणशान्तिस्तत्र चोभयत्रापि दिव्यमेव कार्यमित्यर्थः।

नारदः—"प्रमाणानि प्रमाणज्ञैः पालनीयानि यत्नतः।
सीदन्ति हि प्रमाणानि पुरुषस्यापराधतः॥"

अपराधः—साक्ष्यादीनामस्मारणादिः।

अथ प्रायशः साक्षिभिर्व्यवहारसमाप्ते स्तेयन्निरूप्यन्ते। तत्र—

गौतमः—विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था। प्रायेणेति शेषः।

मनुः—समक्षदर्शनात् साक्षी श्रवणाच्चैव सिद्ध्यति। प्रमितार्थः साक्षी भवतीत्यर्थः।

वृहस्पतिः—"लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ।
या दृष्टिकश्चोत्तरश्च कार्यमध्यगतः परः॥
नृपोध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः।
प्रभेद एषां वक्ष्यामि यथावदनुपूर्वशः॥
जातिनामाभिलखितं येन स्वं पितृनाम च।
निवासश्च स विज्ञेय साक्षी लिखितसङ्ज्ञकः॥
अर्थिना च क्रियाभेदैस्तस्य कृत्वा ऋणादिकम्।
प्रत्यक्षं लेखितो यस्तु लेखितः स उदाहृतः॥
कुड्यव्यवहितो यस्तु श्राव्यते रात्रिभाषितम।
विनिः कृते यथाभूतं गूढसाक्षी स कीर्त्तितः॥
आहूय यः कृतः साक्षी ऋणन्यासक्रियादिषु।
स्मार्यतेऽर्थं मुहुर्यश्च स्मारितः सोऽभिधीयते॥
विभागदाये विपणे ज्ञातिर्यत्रोपदिश्यते।
द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्त्तितः॥
अर्थिप्रत्यर्थिवचनं श्रृणयात्प्रेषितस्तु यः।
उभयोः सम्मतः साधुर्दूतक स उदाहृतः॥
क्रियमाणे च कर्त्तव्ये यः कश्चित्स्वयमागतः।
अत्र साक्षीत्वमस्माकमुक्तो यादृच्छिकस्तु सः॥

य: साक्षी तु दिशं गच्छन् मुमूर्षुर्बा यथाश्रुतम् ।
अन्यं संश्रावयेत्तन्तु विद्यादुत्तरसाक्षिणम् ।।
साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषताम् ।
श्रवणाच्छ्रावणाद्वाऽपि स साक्ष्युत्तरसङ्ज्ञितः ।।
उभाभ्यां यत्र रिपुस्तं कार्यं वा विधिवेदितम् ।
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ।
अर्थि प्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्यात् विसंवादे द्वयोरपि ।।
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ।।
दूषितं घातितं यत्तु सीमायास्तु समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ।।"

अत्र साक्षी द्विविधौ-द्रष्टा श्रोता च । तत्र द्वावपि षड्विधौ । तत्राद्यो लिखित-लेखितस्मारितकुल्ययादृच्छिक् - कार्यमध्यगतभेदात् षोढा । अन्त्योऽपि गूढ-दूतोत्तरसाक्षिराजाध्यक्षग्रामभेदात् षोढैव । तत्र प्रथमन्तु आद्यस्य लक्षणं जातीत्यादिक्रियादर्शी स्वयं लिखितसाक्ष्यो लिखितसाक्षीत्यर्थः । द्वितीयस्य त्वर्थिनेत्यादि क्रियादर्शी वालगादिलिखितो लेखित इत्यर्थः ।

तृतीयस्य त्वाहूयेत्यादि क्रियादर्शी उद्बोधितसंस्कारः स्मारित इत्यर्थः । चतुर्थस्य च विभागेत्यादि क्रियादर्शी धनिकादिसनाभिः कुल्य इत्यर्थः । पञ्च-मस्य तु क्रियमाण इत्यादि क्रियादर्शी अतिरस्कृतापुरस्कृतो यादृच्छिक इत्यर्थः । षष्ठस्य तूभाभ्यामित्यादि तत्क्रियाव्यवहारान्तर्गतस्तत्क्रियादर्शी कार्यमध्यगत इत्यर्थः ।

अत्र रिग्धस्तम् विश्वासः कृतः वाकरः समुच्चयार्थः । यद्यपि कार्यविनि-वेदनात् श्रुतसाक्ष्यसौ । तथापि कार्यमध्यगतत्वं पुरस्कृत्य द्रष्टृमध्ये गणित इत्यवधेयम् । उत्तरषट्के तु प्रथमस्य लक्षणङ्कुड्येत्यादि । अभियुक्ताज्ञातः सन्निभियोत्राभिहिताभियुक्तवाक्यश्रावी गूढसाक्षीत्यर्थः ।

द्वितीयस्यत्वर्थीत्यादि प्रेषितो निर्णयक्षमवादिवाक्यश्रावी दूत इत्यर्थः। तृतीयस्य य इत्यादिश्लोकद्वयं साक्षिवचनात्तदर्थनिश्चयवानुत्तरसाक्षीत्यर्थः। चतुर्थस्यत्वर्थीत्यादि भाषोत्तरश्रावी-अपरः साक्षीत्यर्थः। अस्य तु भाषाद्यपह्नवे सति पूर्वभाषाद्यभिज्ञतया निर्णायकत्वम्। पञ्चमस्य तु निर्णीत इत्यादि पूर्वजयज्ञः पञ्चमः साक्षीत्यर्थः। षष्ठस्य दूषितमित्याद्यभियोगहेतुभूतोपघातद्रष्टोपहन्तव्यसीमासेत्वादिश्रोता ग्रामादिभ्यः षष्ठः साक्षीत्यर्थः।

प्रजापतिः— साक्षी तु द्विविधः प्रोक्तः कृतएकोऽपरोऽकृतः।
लेखारूढः कृतो ज्ञेयो मुक्तकोऽकृत उच्यते"॥

नारदः—एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः।
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते॥
लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः॥
अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्॥
कार्येष्वभ्यन्तरो यश्च अर्थिना प्रहितश्च यः।
कुल्याः कुलविवादेषु भवेयुः तेऽपि साक्षिणः"॥

लिखितस्यैव स्वयं परेण च लक्षणाद् वृहस्पतिना द्वादश साक्षिण उक्ताः।

यत्तु—"न कार्यो नृपतिः साक्षी न कारुर्न कुशीलवः" इति मनुवचनम्, तद्राज्ञः साक्षित्वकरणनिषेधकम्, न साक्षित्वनिषेधकमतो न बिरोधः।

नारदः—"स्वदीर्घेनापि कालेन लिखितः सिद्धिमाप्नुयात्।
संजानन्नात्मनो लेख्यमजानन्तन्तु लेखयेत्"॥

स्वदीर्घेणेति संस्कारोदबोधकलिखनसत्वादयं चिरेणापि साक्ष्यं दातुं शक्नोतीत्यर्थः। संजानन्निति लिपिपटं साक्षिणं तद्धस्तेनैव लेखयेत्। तत् पट्टन्तु परहस्तेनेति विशेष इत्यर्थः।

अथ साक्ष्यर्हाः--

**मनुः**—"यादृशा अर्थिभिः कार्या व्यवहारेषु साक्षिणः ।
तादृशान् सम्प्रवक्ष्यामि यथा वाच्यमृतञ्च तैः ॥
गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः ।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥
आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ।
सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत्" ॥

ऋतं-सत्यम् । मौलाः--प्रसिद्धकुलोद्भवाः, न ये केचिदिति । गुणवत्साक्ष्यभावे निर्दोषतामात्रेणापि साक्षिणो ग्राह्या इत्यर्थः ।

**याज्ञवल्क्यः**—तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियान्विताः ।
यथाजाति यथावर्णं सर्वे सर्वेषु नित्यशः" ॥

यथाजातीति सङ्कीर्णजात्यभिप्रायम् । यथावर्णमिति ब्राह्मणादि - वर्णानामुपादानात् । यथाजातीति स्त्रीणां स्त्रिय इत्येवमादि । एवञ्च सङ्ख्यागुणादिसाम्येऽपि यस्य वादिनः सवर्णाः साक्षिणस्तस्यैव ग्राह्या इति भावः ।

**मनुः**—"स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राः सन्तश्च शूद्राणामन्त्यानामन्त्य-योनयः ॥

**नारदः**—"कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः ।
त्र्यवराः साक्षिणो ज्ञेयाः शुचयः शुद्धबुद्धयः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाप्यनिन्दिताः ।
प्रतिवर्णं भवेयुन्ते सर्वे सर्वेषु वा पुनः" ॥

त्रयोऽवरा येषा ते त्र्यवराः, त्रिभ्यः आरभ्य नवपर्यन्ताः साक्षिणः । यदाह--

**बृहस्पतिः**—नव सप्त पञ्च वा स्युः चत्वारः लघु एव वा ।
उभौ तु श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन" ॥

उभौत्विति पूर्वोक्तगुणेषु सत्स्वेव श्रोत्रियौ चेत्तदोभावपि ग्राह्यौ, एकस्तु श्रोत्रियोऽपि न ग्राह्य इत्यर्थः । श्रोत्रियाविति व्यवरसाक्ष्यपेक्षयोत्कृष्ट-गुणावित्यर्थः ।

शङ्खः—"एकसाक्षी सर्वथा न ग्राह्यः" । गुणवतोप्यग्रहणमिति सर्वथा-पदस्यार्थः । एतच्चोभयाननुमतविषयम् । उभयानुमतस्त्वेकोऽपि ग्राह्य एव । यदाह—

याज्ञवल्क्यः—"उभयानुमतः साक्षी भवेदेकोऽपि धर्मवित्" । इति सकल-साक्षिगुणोपलक्षकम् ।

नारदः—"उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः ।
भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि" ॥

उभयानुमत इत्युभयानुमतिविषय इत्यर्थः । नतु उभयानुमतियोग्यः, इत्यर्थे लक्षणापत्तेः । तपस्विन इत्यादिना गुणवतामेव व्यवरत्वविधानात् । योग्यतालक्षकत्वे चानुमतिपदमनर्थकमेव स्यात्, धर्मवित्पदादेवानुमतियोग्यत्वस्य प्राप्तत्वादित्येतदेव व्यक्तमाह—

विष्णुः "अथ साक्षिणः कुलोच्चजातसम्पन्ना यज्वानस्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यबृद्धाः" अभिमतगुणसम्पन्नमुभयानुमत एकोऽप्येकस्य साक्षित्वेऽभिमतगुणसम्पन्न उभयानुमती मिलित एव तन्त्रम् ।

यत्तु - भिन्ने इमे तन्त्रम् । तेन निर्गुणस्य सदोषस्याप्युभयानुमतस्यैकस्य साक्ष्यमेवेति, तन्न एवमर्थभेदाद्वाक्यभेदापत्तेरिति ।

व्यासः—"शुचिः क्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् ।
प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः" ॥

अनुभूतात्मकसत्यत्वेन यस्य स । तथा—

कात्यायनः—अभ्यन्तरस्तु निःक्षेपे साक्ष्यमेकोऽपि वाच्यते ।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते" ॥

याचित इति निःक्षेपविशेषणम् । न्यायतौल्यादन्यत्रापि ।

तथा—"संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत्।
एक एव प्रमाणं स विवादे परिकीर्त्तितः" ॥

संस्कृतं घटितं पण्यं कुण्डलादि। एतच्च तादृशस्यान्यस्याभावे तस्य च स्तेयत्वपक्षो द्रष्टव्यम्।

मनुः—"एकोप्यलुब्धः साक्षीस्याद् बह्व्यः शुच्योपि न स्त्रियः।
स्त्रीवुद्धेरस्थिरत्वात्तु दोषैरन्यैश्च ये धृताः" ॥

प्रमाणसिद्धे लुब्धत्वे उभयानुमतोऽपि साक्षी न ग्राह्यः। लुब्धत्वन्तु-दोषमात्रोपलक्षणम्।

अथ साक्ष्यनर्हाः

नारदः—"असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः।
वचनाद्दोषतो भेदात् स्वयमुक्तिः स्मृतान्तरः" ॥

श्रोक्षियाद्या वचनतस्तेनाद्या दोषदर्शनात्।

"भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम्।
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिर्णये ॥
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः" ॥

अस्यार्थः—एकभाषार्थस्योत्तरार्थस्य वा निर्णयार्थगृहीतानां साक्षित्व-मिति। एतच्च साक्षिणां सर्वथा तौल्ये वचनभेदे द्रष्टव्यम्। अन्यथा तु—

"वहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्" ॥

इति मनुवचनादेव व्यवस्था। नचेदं साक्ष्युपादानमात्रपरं परिगृह्णी-यादिति वचनात्। नतु तद्वचनप्रामाण्यपरमिति वाच्यम्, परिग्रहानर्थक्या-पत्तेः। नापि वादिनोरेव साक्षिद्वैधेन सतीदम्, एकस्यापि वादिनः साक्षिभेदे अस्यासङ्कोचे जागरूकत्वात्।

याज्ञवल्क्यः—"कैरवहूनां वचनं समेषु गुणिनान्तथा।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः" ॥

नचेदं वचनपदमननुरोधात् परिग्रहपरम् , निर्वीज लक्षणापत्तेः । अथ-

"साक्षिणां लिखितानाम्बिनिर्दिष्टानाञ्च वादिनाम् ।
तेषामेकोन्यथावादी भेदात्सर्वेप्यसाक्षिणः" ॥

इति, कात्यायनवचनेनैकस्याप्यन्यथावादे सर्वेषामसाक्ष्यमुच्यत इति विरोध इति चेन्न । त्रयाणां साक्षिणां मध्ये एकस्यान्यथावादेऽपरस्य तत्तुल्यस्य सत्प्रतिपक्षिततया तृतीयस्य चैकतया तत्र साक्षिणो न निर्णय इत्यत्र कात्यायन-तात्पर्यात् । सत्प्रतिपक्षितावशिष्टानां त्वनेकत्वे तत एव निर्णय इत्यत्र याज्ञ-वल्क्यतात्पर्यादिति । कात्यायनवचनस्य चास्य स्वमूलभूतन्यायविरोधेनावश्य-सङ्कोचत्वादिति । स्वयमुक्ति व्याकरोति --

नारदः—"स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्ययो वदेत्" ।

कात्यायनः - "यः साक्षी स विनिर्दिष्टो नाहूतो नैव देशितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः" ॥

मृतान्तरं विविनक्ति ।

नारदः—"मृतान्तरोऽर्थिनि प्रेते मुमर्षुश्रावितादृते" ।

अर्थी-धनिकः मुमूर्ष्वति-मुमूर्षुणा धनिकेन यः साक्षी स्वदायादेभ्यो-यमियद्धनं मह्यं धारयत्ययन्तज्जानातीति श्रावितः स मृतान्तरोऽपि साक्षी भवत्येवेत्यथः । मृतान्तरस्य तु साक्षित्वे हेतुमाह—

स एव—"योऽर्थः श्रावयितव्यः स्यात् तस्मिन्न सति वार्थिनि ।
कृतद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः" ॥

अर्थिना साक्षिणि योर्थो विवादास्पदीभूतः श्रावयितव्यः । त्वमिममर्थं जानीहीति तस्मिन् श्रावयितव्येऽर्थे श्रावयितरि अर्थिन्यसति अश्रुतत्वा दर्थविशेषस्य त्वमर्थे साक्षी साक्षित्वं वदत्विवतिहेतोर्मृतान्तरो न साक्षी भवती-त्यर्थः । तेनैतदुक्तम्भवति यस्मिन्नर्थिनि प्रेते अर्थिपुत्रस्य विशिष्यज्ञानं न

भवति तत्र साक्षिणः सत्वेऽपि न साक्षित्वम् सविशेषमनुपन्यासात् । सामान्योपन्यस्तस्यापि तस्य साक्षिणोपि न सङ्ख्यादौ विशेषे साक्षित्वम्, स्वयमुक्तित्वापत्तेः । किन्तूभयोरर्थिसाक्षिणोरुपयुक्ताशेषविशेषाभिज्ञतायामेव मृतान्तरः साक्षीति भावः । श्रोत्रियादीन् व्याकरोति—

स एव—"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः" ॥

वचनादिति-तेषां साक्षित्वकरणनिषेधकाद्वचनात् । तथा च ते पूज्यतमतया तपश्चर्य्यासक्तत्वेन विवादपदविस्मरणशीलतया न साक्षिणः कार्य्याः । अकृतात्त्वं जानन्तो भवन्त्येव साक्षिणः । तदुक्तम्-"उभौ तु श्रोत्रियौ ग्राह्याविति" । नात्र हेतुरिति नात्रोक्तोऽन्यो हेतुरित्यर्थः । दोषादसाक्षिणो दर्शयति--

नारदः—"स्तेनाः साहसिकाश्चण्डाः कितवा व्याधकास्तथा ।
आसाक्षिणस्ते त्वष्टत्वात्तेषु सत्यं न विद्यते" ॥

मनुः-–नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
अर्थसम्बन्धी जयफलभागी । आप्तः-सहयो विश्वस्चयो यस्य ।

नारदः—"दास- नैकृतिकाश्राद्ध-वृद्धस्त्री - बालचक्रिकाः ।
मत्तोन्मत्तप्रमत्तार्त्त - कितबा - ग्रामयाजकाः ॥
महापथिक - सामुद्र - वणिकप्रव्रजितातुराः ।
व्यङ्गयैक- श्रोत्रियाचारहीन-क्लीव- कुशीनराः ॥
नास्तिकव्रात्यदाराग्नि - त्यागिनोऽथाज्ययाजकाः ।
एकस्थालीसहायारिचरज्ञाति - सनाभयः ॥
प्राग्दृष्टदोषशैलूष-विषजीव्या हि तुण्डिकाः ।
गरदाग्निदकीनाश - शूद्रापातोपपातिताः ॥
क्लान्तसाहसिकाश्रान्त - निर्द्धूतान्त्यावसायिनः ।
भिन्नवृत्तासमावृत्त- जडतैलिकसूलिकाः ॥
भूताविष्ट - नृपद्विष्ट-वर्ष नक्षत्रसूचकाः ।
अघशंस्यात्मविक्रेतृ - हीनाङ्ग - भगवृत्तयः

ऐन्द्रजालिकलुब्धोग्र - श्रेणीगणबिरोधिनः ।
वधकश्चित्रकृच्छङ्खः पतितः कूटकारकः ॥
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः ।
मनुष्यपशुमांसास्थि - मधुक्षीराम्बु - सर्पिषाम् ॥
विक्रेता ब्राह्मणश्चैव द्विजो वार्द्धुषिकाश्चये ।
च्यूतः स्वधर्मात् कुलिकः सूचको हीनसेवकः ।
पित्रा विवदमानश्च भेदकश्चेत्यसाक्षिणः ॥
श्रेण्यादिषु च वर्गेषु कश्चिच्चेद्द्वेष्यतामियात् ।
तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारः सर्व एवते ॥"

नकृतिकाः - वञ्चकाः । अश्रद्धः-- श्राद्धहीनः । बृद्धो-- ग्लानेन्द्रियः । स्त्री पुसां न साक्षिणी । बालोऽजातविवेकः । महापथिको — दीर्घाध्वगामी । आतुरो--अतिरोगपीडितः । एकः श्रोत्रियः द्वयोः श्रोत्रिययोर्विहितत्वात् सोप्यननुमतः । क्लीवम्-- नपुंसकम् । कुशीलवो रङ्गोपजीवी । एकस्थालीसहाय— एकपाकभोजी । अविचरो--वादिशत्रुचारी । सनाभयस्तु---

"मातृस्वसृसुताश्चैव सोदर्यसुतमातुलाः ।
एते सनाभयस्तूक्ताः साक्ष्यं तेषां न विद्यते ॥"

इति कात्यायनोक्ताः । शैलूषो नटभिन्नरङ्गोपजीवी विवक्षितः । विषजीवी विषवैद्यः । आहितुण्डिकः सर्पक्रीडोपजीवी व्यालग्राही । गरदाग्निदो परानिष्टार्थं विषाग्निप्रयोक्तारौ । कीनाशो -दालिक. । उपपातितः--उपपातकाक्रान्तः । क्लान्तोऽतिखिन्नः । अश्रान्तो--अयोखकारी । निर्धूतो--ग्रामराजकुलश्रेण्यादिभिर्निःसारितः, लोकभयशून्य इति केचित् । अन्त्यावसायी--क्रोधादिनासंस्कृताग्निनिर्वापकः । भिन्नवृत्तः-- स्वकर्मत्यागी । असमावृत्तो--अकृतसमावर्त्तनः । तैलिकः--तैलविक्रयी । मूलिकः मूलं विप्रलम्भस्तत्कारी । अघशंसी--पराभिशापशीलः । हीनाङ्ग- प्रकृतपरिमाणन्यूनाङ्गः । शतेरवाच्च बृषभनाटनेन भिक्षाऽटनशील । प्रत्यवसितस्त्यक्तप्रव्रज्यः । कुलिकः परिच्छेदकत्वेन नियुक्तः । सर्वे बैते मन्दाभिधायिनो लोभादिशङ्करात् । तथा च-

मनुः— ''लोभान्मोहाद्भयान्मैत्रात् कामात्क्रोधात्तथैव च ।
आज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥''

अत्र यद्यपि साक्षिणां विशेषविधिनैव शेषप्रतिषेध इति कण्ठतो निषेधोऽनर्थकस्तथाऽपि विहितालाभेप्यमीषामनुपादानाय मौद्गश्च रुर्भवतीत्युक्ते ऽयज्ञिया माषा इतिवत् । तथा च विहितालाभेऽविहिता निषिद्धा साक्षिणो ग्राह्याः । कण्ठतो निषिद्धास्तु सर्वथा न ग्राह्या इत्याशयः । एतच्च साक्षिपरीक्षणमृणादिषु, नतु साहसादिषु । यदाह---

कात्यायनः— ''ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययिके चापि न परीक्षासु चिन्त्यता ॥''

तथा-- ''व्याघाते च नृपाज्ञायां सङ्ग्रहे साहसेषु च ।
स्तेयपारुष्ययोश्चैव न परीक्ष्येत साक्षिणः ॥''

सङ्ग्रहः-- सम्यग्ग्रहणम् , परस्त्रियै कामुकतया ताम्बूलप्रेषणादि ।

''अन्तर्वेश्मनि रात्रौ च बहिर्ग्रामाच्च यो भवेत् ।
एतेष्वेवाभियोगेषु परीक्षा नात्र साक्षिणाम् ॥

मनुः-- ''साहसेषु च सर्वेषु स्तेयसङ्ग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्ष्येत साक्षिणः ॥''

उशनाः-- ''दासोऽन्धो बधिरः कुष्ठी स्त्री बालस्तु विवादयः ।
एतेष्वनभिसम्बन्धाः साहसे साक्षिणो मताः ॥''

स्तेयसंग्रहणादिकार्याणां सिद्धेनैव जायमानत्वात् दैवगत्यैव परसाक्षिणो न भवन्तीति मत्वा नैते परीक्षणीया । अनभिसम्बन्धाः प्रकृतापराधजयाद्यसम्बन्धाः । केतित्वर्ज्जनीया एव । यदाह—

कात्यायनः—''कार्यगौरवमासाद्य भवेयुर्य्योपि साक्षिणः ।
तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् ॥

न बान्धवो नचारातिर्ब्रूयुस्ते साक्ष्यमन्यथा।
बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत्॥
विक्रयाद्बान्धवः स्नेहाद्वैनिर्यातनादरिः।"

एको यथोक्तगुणहीन उभयाननुमतः। नचात्र स्त्र्यादीनां विधेर्निषेधाच्च विरोधः। तद्विधेः साक्ष्यन्तराभावविषयकत्वात्। तदाह—

मनुः— "स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा।
शिष्येण बन्धुना वाऽपि दासेन भृतकेन वा॥"

इति साक्षिणः सत्स्वेव दूषणेषु दूष्याः। यदाह—

बृहस्पतिः— "साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत्।
अदुष्टं दूषयन् वादी तत्समं दण्डमर्हति॥"

तत्समं--विवादविषयसमम्। साक्षिणां दूषणं सभासदामन्येषाञ्च सर्वेषां विदितं ग्राह्यम्। नतु तदपि त्र्यवरादिसाक्षिभिःप्रतिपाद्य मनवस्थापत्तेः। यदाह—

नारदः-- "सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात्॥
अन्यैश्च साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम्।
अनवस्था भवेद्दोषस्तेषामन्यस्य सम्भवात्॥
असाध्यं साधनानर्हं सिद्धत्वाद्दोषवर्जनात्।"

अनवस्थाविरहात्।

बृहस्पतिः— "लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः।
तस्य कार्यं न सिद्ध्येत यावत्तन्न विशोधयेत्॥"

तल्लेख्यं साक्षिणः प्रमाणमिति यावत्।

तथा— 'साक्षिभिर्गदिते साक्ष्ये विक्रान्ते कार्यनिर्णये।
पुनर्विवादं कुरुते तस्य राजा विचारयेत्॥"

अयं कूटसाक्षीत्यवधाय पुनर्वादी विवादं कुरुते तद्राजा विचारयेदित्यर्थः ।

कात्यायनः—"नातथ्येन प्रमाणन्तु दोषेनैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यादर्थाच्च हीयते ॥
प्रमाणस्य हि ये दोषा वक्तव्यास्तेऽपि वादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥"

वादिनो ज्ञानाभावादनुद्भाविता दोषाः सभ्यैः शास्त्रप्रदर्शनेन प्रकटीकृत्य सर्वे वक्तव्या इत्यर्थः । अथ साक्षिणो यथाप्रष्टव्यास्तदुच्यते । तत्र—

कात्यायनः--"न कालहरणङ्कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत्काला द्धर्मव्यावृतिलक्षणः ॥"

नारदः--"आहूय साक्षिणः पृष्टे तन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥"

ननु पृथक् पृथक्कथं प्रश्नः," नासमवेताः प्रष्टव्याः प्रब्रूयुरिति" गौतमवृहस्पतिकात्यायनेन बिरोधस्य परिहृतत्वात् । यदाह—

गौतमः--"समवेतैस्तु यद्दृष्टं वक्तव्यन्तु तथैव तत् ।
विभिन्नैर्नैककार्यन्तु तद्वक्तव्यं पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद्भृगुः ॥"

मिलितैरेवावगते कार्ये लिखिता एव प्रष्टव्याः । एकैकशस्तु तत्कार्यावगतौ पृथक् पृथगित्यविरोधः ।

कात्यायनः--"अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ ।
प्रत्यक्षं वादयेत्साक्ष्यं परोक्षं न कदाचन ॥
अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेष्वपि ॥

तुल्यगणिसमेयानामभावेऽपि हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं न ततोऽन्यथा ।।
वादिप्रतिवादिवस्तूनां सन्निधौ साक्षिवादनम् ।"

कार्य्यमिति मुख्यः कल्पः । वस्तुमात्रसन्निधापनाशक्यत्वे सति कार्य्यमित्यपरः कल्पः । अयञ्च नियमश्चतुष्पादादिष्वेव हिरण्यादिषूत्तरस्त्वसन्निधावपि साक्षिवादनन्तत्र तुल्यम् । तुलापरिच्छेद्यं गणिमं कपर्द्दकादिमेयं मातव्यम् । धान्यादिक्रियाकारो व्यवहारः । तेन सर्वेषु व्यवहारेस्वेषैव रीतिरित्यर्थः ।

मनुः—"देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
प्राङ्मुखोदङ्मुखान् वाऽपि पूर्वाह्णे तु शुचिः शुचीन् ।।
सभास्थः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोनुयुञ्जीत विधिना तेन सान्त्वयन् ।।
यद्व्योरनयोर्वेत्थं कार्येऽस्मिश्चेष्टितं मिथः ।
ब्रूथ सर्वमशेषेण युष्माकं ह्यत्र साक्षिता ।।
सत्यं साक्षी ब्रुवन् साक्ष्ये लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्त्ति वागेषा ब्रह्मनिर्मिता ।।
साक्ष्येऽनृतं वदन् साक्षी पाशैर्बध्येत दारुणैः ।
विवशः शतमाजातीस्तस्मात्साक्षी वदेदृतम् ।।
सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते ।
तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ।।
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
नावमंस्थास्स्वमात्मानं नृणां साक्षिणमुत्तमम् ।।
मन्यन्ते वै पापकृतो न कश्चित पश्यतीह माम् ।
तांश्च देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ।।
द्यौर्भूमिरापो हृदयं चन्द्रार्क्काग्नियमानिलाः ।
रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ।।"

शतमाजातिः - शतं जन्मानि ।

याज्ञवल्क्यः—"साक्षिणः श्रावयेद्वादि-प्रतिवादि - समीपगान् ।
ये पातककृतां लोका महापातकिनान्तथा ॥
अग्निदानान्तु ये लोका ये च स्त्रीबालघातिनाम् ।
तान् सर्वान् समवाप्नोति यः साक्ष्यमनृतं वदेत् ।।"

बृहस्पतिः—"सत्यप्रशंसा वचनै - रनृतस्यापवर्जनैः ।
सभ्यैः सम्बोधनीयाश्च धर्मशास्त्रप्रवेदिभिः ।।
आजन्मनश्चामरणात्स्वकृतं यदुपार्जितम् ।
तत्सर्वं नाशमायाति अनृतस्याभिशंसनात् ।।
कूटसभ्यः कूटसाक्षी ब्रह्महा च समा स्मृताः ।
भ्रूणहा च त्रिहात्तेभ्यो नाधिकः समुदाहृतः ।।
एवं विदित्वा तत्साक्षी यथाभूतं वदेद्वचः ।
तेनेह कीर्त्तिमाप्नोति परत्र च शुभाङ्गतिम् ।।"

साक्षिप्रावणे विष्णुनारदौ—

"अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ।।"

नारदः—"पौराणैर्द्धर्मवचनैः सत्यमाहात्म्यदर्शनैः ।
अनृतस्यापवादैश्च भृशमुत्तापयेदपि ॥
नग्नस्तु प्रतिबद्धः सन् वहिर्द्वारे वुभुक्षितः ।
अमित्रान् वहुशः पश्येद्यः साक्ष्यमनृतं वदेत् ।।
यां रात्रिमधिरिन्ना स्त्री याञ्चैवाक्षपराजितः ।
याञ्च भाराभितप्ताङ्गो दुर्विवक्ता स तां वसेत् ।।
साक्षी साक्ष्यसमुद्देशे गोकर्णशिथिलश्चरन् ।
सहस्रं वारुणान् पाशानात्माधि प्रतिमुञ्चति ।।
तस्य वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
एवं सबन्धनात्तस्मान्मुच्यते नियतं क्रमात् ।।
एकमेवाद्वितीयं यत् प्राहुः पावनमात्मनः ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।।

वरं कूपशताद्वापी वरं वापी शताद्ध्रदः ।
वरं शतह्रदात्पुत्रः सत्यं पुत्रशताद्वरम् ॥
भूर्द्धारयति सत्येन सत्येनोदेति भास्करः ।
सत्येन हि वायुर्वाति सत्येनापः स्रवन्ति च ॥
सत्यमेव परं धाम सत्यमेव परन्तपः ।
सत्यमेव परं धर्मो लोकानामिति निश्चितम् ॥
सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृतम् ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
साक्षिधर्मे विशेषेण सत्यमेव वदेत्ततः ॥
पुराणानुमतौ यत्र द्वौ श्लोकौ समुदाहृतौ ।
यौ श्रुत्वा सत्यमेवेह सदा वाच्यं नरैर्बुधैः ॥
यः परार्थेऽपहरते स्वां वाक् च पुरुषाधमः ।
आत्मार्थे किं न कुर्यात्स पापं नरकनिर्भयः ॥
अर्थो वै वाचिनियता वाङ्मूला वाग्विनिःसृताः ।
यस्तु तांस्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥"

अधिविन्ना-प्रत्यग्र-सपत्नीका । गोकर्णशिथिलश्चरन्-दृढमत्र वन्नित्यर्थः ।

बौधायनः--"त्रीनेव च पितॄन् हन्ति त्रीनेव च पितामहान् ।
सप्तजातानजातांश्च साक्षी साक्ष्यं मृषा वदन् ॥
आत्मना सह जातानां सप्तत्वं समुदाहृतम् ।
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ॥
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ।
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ॥
सर्वं भूम्यनृते हन्ति साक्ष्यं साक्षी मृषा वदन् ॥"

## अथ साक्षिशपथः

शङ्खः-- साक्षिणः सुवर्णरजतगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्ठरथो-

पस्थशस्त्रादिभिस्तथा पुत्रपौत्रैर्यथावर्णपरिग्रहविशेषः स्यात् इ देवब्राह्मणस्वामिनामग्रतः ।

सुवर्णेति-- सुवर्णादिस्पर्शनेन, शापयेदित्यर्थः । तथा-- पुत्रपौत्रैरिति-पुत्रपौत्रशिरःस्पर्शनेन स्वल्पेऽर्थे शापयेदित्यर्थः । यथावर्णमिति यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथ आम्नातः स्मृत्यन्तरे स एव तत्कारयितव्य इत्यर्थः ।

**नारदः**-- "सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥"

विप्रमित्यपकृष्टब्राह्मणविषयम् । उत्कृष्टे गौतमेन शपथनिषेधात् । तदाह –

**गौतमः**--"शपथे नैत्यकेन सत्यकर्म तदेव ब्राह्मणससदि स्याद्ब्राह्मणानाम् ।" सत्यकर्म—सत्यव्यवस्थानम् । एवञ्च ब्राह्मणव्यतिरिक्तानामपि साक्षिणामेक शपथो कौ, क्षत्रियं वाहनायुधैरित्यादिवहुशपथोक्त्या बिरोध इति न देश्यम् । गौतमवचनस्य गुणवत् साक्षिविषयतया पारिजाते सङ्कोचनादिति ।

**मनुनारदौ** –"ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
ब्रह्मघ्ना ये स्मृता लोका येच स्त्रीबालघातिनाम् ।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्वदतो मृषा ॥
जन्मप्रभृति यत्किञ्चित् पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥
एकोऽहमस्मीत्यात्मान यत्त्वं कल्याणमन्यसे ।
नित्यं स्थितस्ते हृद्येषः पुण्यपापेक्षिता मुनिः ॥
यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥"

यमः-- संयमनकर्त्ता । वैवस्वतः- सूर्यपुत्रः । अविवादोऽविसंबादः ।

तथा– "नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ।
क्रुद्धशत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥

अवाक्छिरास्तमस्यन्धे किल्विषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्मनिर्णये ॥
अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।
यो भाषेतार्थवैकल्य - मप्रत्यक्षं सभाङ्गतः ॥
यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते ।
तस्मान्न देवाः श्रेयांसं लोकेऽयं पुरुषं विदुः ॥"

नारदः--"यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतः सङ्ख्यया तस्मिन् शृण सौम्यानुपूर्वशः ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदीः ॥"

मनुः-- "अप्सु भूमिवदित्याहुः स्त्रीणां सङ्गेऽथ मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्म समयेषु च ॥
पशुवत् क्षौद्रघृतयोः यानेषु च तथाऽश्ववत् ।
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥
एतान् दोषानवेक्षस्व सर्वाननृतभाषणं ।
यथाश्रुत यथादृष्टं सर्वमेवाञ्जसा वद ॥"

अर्थवैकल्यम्- अर्थान्यथात्वम् । पञ्चबान्धवान्- मातापिताभार्याऽपत्यसाम्ये चेति पञ्चेति पारिजातः । अप्सु- तडागादिषु । स्त्रीणां मैथुनरूपे भोगे । अब्जेषु रत्नेषु जलजेषु मुक्तादिषु । ब्रह्मणि वेदेऽन्यत्र तु सामान्यश्रुतमेवानिष्टमन्वीयते ।

नारदः-- "सत्यं ब्रह्मानृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
उक्त्वाऽनृतं महाघोरं नरकं प्रतिपत्स्यसे ॥
नरकेषु च ते शश्वज् जिह्वामुत्कृत्य दारुणाः ।
असिभिर्घातयिष्यन्ति बलिनो यमकिङ्कराः ॥

शूलैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणम् ।
अवाक् शिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्नौ ह्रदेषु च ॥

अनुभूय स्वदुःखान्ताश्चिरं नरकवेदनाः ।
इह यास्यस्यभव्यासु गृध्रकाकादियोनिषु ॥
ज्ञात्वैताननृते दोषांस्तथा सत्येषु सद्गुणान् ।
सत्यं वदोद्धरात्मानं नात्मानं पातय स्वयम् ॥
न बान्धवा न सुहृदो न धनानि महान्त्यपि ।
अलं धारयितुं सर्वे तमस्यन्धे निमज्जतः ॥
पितरस्त्ववलम्बन्ते पुत्रे साक्षित्वमागते ।
तारयिष्यति किं वाऽस्मान् किमधः पातयिष्यति ॥
सत्यमात्मा मनुष्यस्य सर्वं सत्ये प्रतिष्ठितम् ।
सर्वथैवात्मनात्मानं श्रेयस्येव नियोजय ॥
यां रात्रिमजनिष्ठास्त्वं याञ्च रात्रिं मरिष्यसि ।
वृथा तदन्तरं ते स्यात् साक्ष्यं चेदन्यथा वदेः ॥"

याज्ञवल्क्यः- "स्वकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वन्तस्य जानीहि यं पराजयसे मृषा ॥"

मनुः-- "गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रैष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यतीताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥"

शूद्रवच्छपथङ्कारयेदित्यर्थः ।

## अथ साक्ष्युक्तिविधिः

कात्यायनः— "संमान्यस्तैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मोऽन्यत्र स्यात् स्थावरेषु च ॥

बधे च प्राणिनां साक्ष्यं वादयेच्छवसन्निधौ ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥
अनुद्विग्नेन चित्तेन दृष्टं सम्यग्यदात्तु यत् ।
प्रत्यक्षं तत्स्मृतं कार्य्यं साक्ष्यं साक्षी तु तद्वदेत् ॥"

चिह्नस्य--शवचिह्नस्यास्थिकेशादेः । अशक्यानयने तु साक्षिणि ।

कात्यायनः-- "अशक्य आगमो यत्र विदेशे प्रतिवादिनाम् ।
त्रैविद्यप्रहितं तत्र लेख्यं साक्ष्यं प्रदापयेत् ॥"

तत्र साक्षिनिगदश्राविधार्मिकलिखनादिना निर्णयः कार्य्यः ।

वृहस्पतिः-- 'विहायोपानदुष्णीषे दक्षिणं पाणिमुद्धरेत् ।
हिरण्यगोसकृद्दर्भान् समादाय ऋतं वदेत् ॥"

अत्र दक्षिणपाण्युद्धारो- अवधानार्थोऽ दृष्टार्थो वा ।

गौतमः- "नासमवेताः प्रष्टव्याः प्रब्रूयुः ।" असमवेता- अमिलिताः ।

कात्यायनः—"समवेतैस्तु यद्दृष्टं वक्तव्यं तत्तथैव हि ।
विभिन्नैर्नैककार्य्यन्तु तद्वक्तव्यं पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद्भृगुः ॥
नादृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥"

नैककार्यमनेककार्य्यम् ।

तथा—"स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणे राज्ञा न प्रष्टव्याः पुनः पुनः" ॥

## अथ साक्षिपरीक्षा

बृहस्पतिः—"उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः। तत्र शङ्ख-लिखितौ—तत्र मन्त्रिभिः शास्त्रसामर्थ्याद् दुष्टलक्षणं ग्राह्यम्। तदाह—

तिर्यक् प्रेक्षते, समन्तादवलोकते, अकस्मान्मूत्रपुरीषं विसृजति, देशाद् देशान्तरं व्रजति, पाणिना पाणिं पीडयति, नखं निकृन्तति, मुखमस्य विवर्णतामेति, प्रस्विद्यति वास्य ललाटम्, न चक्षुर्न च वाचं प्रतिस्फुरति, अकस्माद्गदति, पुनः पुनरन्यमनुवदति, बहिर्निरीक्षते, शस्त्रं परामृशति, लोकमुपवर्णयति, भूमिं विलिखति, शिरः प्रकम्पते ओष्ठौ निर्भजति, सृक्किणी परिणेचि, अधिस्थितः कर्मसु महत्स्वपि भ्रुवौ संहरति हसति, तूष्णीं ध्यायति। पूर्वोत्तरबिरुद्धं व्याहरति। एवमादिदुष्टलक्षणं क्रुद्धस्य च स्वमिनोऽन्यत्र प्रकृतशीलात्। विकृतस्वरादयः कूटत्वसम्भावनायां हेतव इति भावः।

## अथ कूटसाक्षिदण्डः

मनुः—'लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वन्तु साहसम्।  
भयादद्वौ मध्यमौ दण्डौ मैत्रात्पूर्वञ्चतुर्गुणम्॥  
कामाद्दशगुणं पूर्वं क्रोधाच्च त्रिगुण परम्।  
अज्ञानादद्वे शते पूर्णे बालिश्याच्छतमेव तु॥  
एतानाहुः कूटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिभिः।  
धर्मस्याव्यभिचारार्थमधर्म - नियमाय च॥  
कूटसाक्ष्यन्तु कुर्वाणांन्त्रीन्वर्णान् धार्मिको नृपः।  
प्रवासयेद् दण्डयित्वा ब्राह्मणन्तु विवासयेत्"॥

सहस्रं पणानामिति शेषः। मोहात्-भ्रमात्। पूर्वं साहसं सार्द्धपणशतद्वयम्। द्वौ मध्यमौ साहसावित्यथः। तेन-पणसहस्रं पूर्वञ्चतुर्गुणम्, तेन पणसहस्रम्। कामात् स्वनिगादकवादिस्त्र्यनुरागादितः दशगुणं पूर्वम्, तेन-पञ्चविंशति सती। त्रिगुणं परं पूर्वापेक्षया मध्यमसाहसिकमेव पञ्चपणशतरूपम्, तदेव त्रिगुणमिह ग्राह्यम्, तेन सार्द्धपणसहस्रमित्यर्थः। अज्ञानात् तात्कालिकभ्रमाद् बालिश्यमत्र-यौवनोन्मेषप्राप्तौकदः। ब्राह्मणन्त्विवति,

शब्देन ब्राह्मणस्य दण्डो व्यवच्छिद्यते, तेन तस्य देशाद्बहिष्करणमात्रं दण्ड इत्यर्थः ।

याज्ञवल्क्यः—"पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः" ॥

एतच्च लोभादपि वहुकारणनिश्चये ।

तथा—यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तु तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत्" ॥

श्रावितः-श्रावितवान् । निह्नुते निगदकालेऽपजयति । विष्णुः-कटसाक्षिणां सर्वस्वापहारः" । एतच्च तच्छीलविषयम् ।

नारदः—"यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणन्दाप्योदसञ्जसा" ॥

रोगास्तु—"ज्वरातीसारविस्फोट - गूढास्थि - परिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैहिका व्याधयो नृणाम्" ॥

इत्येते ग्राह्याः । अत्र रोगादिकं घोरं ग्राह्यम् । तच्च वक्ष्यते-

बृहस्पतिः—"आहूतौ यस्तु नागच्छेत् साक्षी रोगविवर्जितः ।
ऋणदण्डञ्च दाप्यः स्यात्त्रिपक्षात् परतस्तु सः ॥
अपृष्टाः सत्यवचने पृष्टाश्चावचने तथा ।
साक्षिणः सन्निरोद्धव्या दण्डया गर्ह्याश्च धर्मतः" ॥

रोगपदमलङ्घ्यप्रतिबन्धकपरम् । ऋणपदम्-विवादवस्तुमात्रपरम् ।

कात्यायनः-"सम्यक्क्रियाऽपरिज्ञाने यः कालः साक्षिणः परम् ।
सन्दिग्धञ्चात्र साक्ष्यं स्यात् सद्यः स्पष्टं विवादयेत्" ॥

निगाद्या स्मरणे तत्स्मरणार्थं कालो देयः, स्मरणे तु साक्षिणः सद्य एव निगाद्या इत्यर्थः ।

कात्यायन.--"अवाचिनरके कल्पं वसेयुः कूटसाक्षिणः" ।

गौतमः-"अवचने दोषिनः स्वर्गिनः सत्यवचने विपरीते नारकाः" । विपरीतोऽनृतवचनोऽथ सत्यापवादः । तत्र-

मनुः—"शूद्रविट्क्षत्रविप्राणां यत्रर्त्तोक्तौ भवेद्वधः ।
तत्र वक्तव्यमनृतं तत्सत्यादतिरिच्यते" ॥

ऋतोक्तौ यत्यभिधाने यतिनो नानृतवचने दोषोस्ति जीवनञ्चेत्तदधीनम्, नतु पापीयसो जीवनं पापीयसः चाण्डालादेः ।

याज्ञवल्क्यः—"वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः" ॥

मनुः--"वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥
कूष्माण्डैर्वाऽपि जहुयात् घृतमग्नौ यथाविधि ।
उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा" ॥

चरुरनवस्रावितोन्तरुष्मपक्व ओदनः । अब्दैवतेन आपो हिष्ठे" त्यादिना ।

विष्णुः—"तत्पापशोधनाय कूष्माण्डीर्ज्जुहुयात् । शूद्रस्त्वेकाह्निक गोदशकस्य ग्रासन्दद्यात् । तत् पापन्तादृगन्यताभिधानजनितपापं, जुहुयाद् द्विजातिरिति शेषः । आह्निकम्-दिवसाहाररूपम् ।

## अथ साक्षिनिगदः

व्यासः "कालाकृतिवयोद्रव्य - देशजातिप्रमाणतः ।
अन्यूनञ्चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत्" ॥

यावदुक्तं वादिनोक्तं तावत्साक्षिणे निगदिते वादिनो जय इत्यर्थः ।

बृहस्पतिः--"यस्याशेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात्" ॥

अन्यथा-अशेषप्रतिज्ञातप्रतिपादनाभावे। अयञ्च द्वेधा सम्भवति अनभिधाने, अन्यथाभिधाने वा। अन्त्योऽपि चतुर्द्धा न्यूनाभिधाने, अधिकाभिधाने,स्वाज्ञानाभिधाने, विरुद्धपक्षाभिधाने च। अत्र सर्वत्र च प्रकृतसाध्यासिद्धिः, किन्तु प्रथमतुर्ययोः प्रमाणान्तरमनुसरणीयम्, नतु तावतैव तद्भङ्गनिर्णयो विचारारम्भकसंशयस्यानिवृत्तेः। नच न जानामीति निगदिते पराजय एव वादिन इति प्रदीपलिखनविरोध इति वाच्यम्। प्रदीपकृता ह्यनिगदे संशयतादवस्थ्येन प्रमाणान्तरानुशरणं ब्रुवता स्वज्ञानाभावनिगदेऽपि तस्योक्तप्रायत्वात् कथं तर्ह्यज्ञानाभावनिगदेऽपि भङ्गलिखनं साक्षिज्ञानव्याप्तार्थविशेषाभिप्रायेणेति।

द्वितीयतृतीययोस्तु मानान्तरानुसरणमित्यत्र न्यूनमभ्यधिकं वापीत्यादिवचनमेव दर्शयिष्यते। तस्मात्पञ्चमे परं भङ्गः। तत्र

विष्णुः- "यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्।
अन्यथा वादिनो यस्य तद्वर्णस्य पराजयः" ॥

अन्यथावादिन इति प्रतिज्ञातार्थस्यासत्यत्ववादिन इत्यर्थः। पूर्वार्द्धे प्रतिज्ञातार्थसत्यत्वस्यैवारोपस्थिततयाऽन्यथापदेन तदसत्यत्वस्यैवाभिधानात्तथैव व्युत्पत्तेः। वादिन इत्यस्य विभागेऽर्थपौनरुक्त्यादन्यथेति मात्रस्य साकाङ्क्षतया भवन्तीत्यध्याहारगौरवात्, अध्याहारलक्षणवाक्यभेदापत्तेश्चेति।

अथ निगादः

नारदः—"निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः।
न कुर्यादक्षरसमं न तन्निगदितं भवेत्" ॥

त्वं मह्यं शतस्य हेम्नां धारय एष च तद्वदेत्युदिष्टः साक्षी यत्र द्रव्यं निगदति सङ्ख्यायान्तमुह्यति तत्र द्रव्यांशं तन्निगदनिरस्य संशयमपहायानिर्णीते सङ्ख्यांशे मानान्तरमनुसरणीयमित्येके द्रव्यांशेऽपि क्रियान्तरमनुसरणीयमिति सम्प्रदायः।

तथा—"न्यूनमभ्यधिकं वाऽपि प्रब्रूयुर्यस्य साक्षिणः ॥
तदप्यनुक्तं विज्ञेयमेष साक्षिविधिः स्मृतः" ॥

अयमर्थः-वादिना शत अक्षिप्ते न तावदधिकाभिधानं साक्षिणः प्रमाणावगतसार्द्धशतग्रहणमूलकमेतदिति वक्तुं शक्यते। आदराभ्यासातिशयो हि स्मृतिमूलसंस्काराधायकः। स चार्थिन एव युज्यते न साक्षिणस्तेनार्थी न स्मरति। साक्षी च स्मरत्यधिकमिति नोपपन्नं नाप्यर्थिकृतप्रतिज्ञासत्यत्वप्रतिपादनार्थम्, अर्थिनाप्यधिकग्रहणस्याप्रतिज्ञातत्वात्। नापि विषयान्तरम्, देशकालाद्यैः प्रतिज्ञानात्। तेनान्यथानुपपत्त्येदमवगम्यते-यदयं ग्रहणस्वरूपं जानात्येव, द्रव्यसङ्ख्यादौ तु भ्रान्त इति मूलभूतवादिवाक्यविरोधादवसीयते, नच भ्रान्तिमूलमभिधानमन्यतरप्रतिज्ञासत्यत्वे प्रमाणम्।

ननु भवत्वेवमधिकाभिधाने, न्यूनाभिधाने तु कथमुत्तरवादि उक्तशताग्रहणस्य साक्ष्यभिहितपञ्चाशद् ग्रहणेऽपि सत्वात्कथं न तस्य विजयः। उच्यते-नात्रोत्तरवादिनः शतसंङ्ख्यास्वरूपं तात्पर्यम्। तथा सति विशेषनिषेधप्रतिज्ञायाः शेषाभ्यनुज्ञाफलकत्वादिति न्यायेन शतसंङ्ख्यानवच्छिन्नग्रहणस्वीकारप्रसङ्गात्। किन्तु शतं मया न गृहीतमित्यस्यायमर्थो यत्तस्मिन् देशादौ न मयास्य किमपि गृहीतमिति पञ्चाशद्ग्रहणाभिधानेऽपि नान्यतरप्रतिज्ञासत्यत्वमिति साधूक्तम्। तदप्यनुक्तम् विज्ञेयमिति सर्वत्र चात्र संशयप्रशमनार्थं दिव्यादिना क्रियान्तरेण निर्णयोक्तस्यापि सन्देहानपाकरणे न फलतोनुक्तत्वादतो नैतावता जयपराजयावधारणम्, किन्तु क्रियान्तरमिति वाक्यार्थ इति युक्तमुक्तम्। न तन्निगदितं भवेदिति भवदेवस्मृतिसारादयः।

नव्यास्तु - इयाँस्तु विशेषः -- साक्षिणा सर्वथा संङ्ख्यानभिधानेऽधिकाभिधाने च सकलप्रतिज्ञायामेव क्रियान्तरं, संङ्ख्यायां भ्रान्तस्य द्रव्येऽपि भ्रमसम्भावनया तन्निगदस्यैवानुपादानात्, पञ्चाशद्ग्रहणस्य भ्रान्त्यादिमूलत्वे शङ्काबीजाभावात्। तदतिरिक्ताभिधाने तु विस्मरणस्यापि सम्भवाद्धर्मव्यवहारे छलस्यावश्यनिरस्यत्वात्पञ्चाशद्ग्रहणनिगद आद्रीयत एव बिरोधाभावादिति समुपादाय परीक्ष्यते। नचाप्यत्रानुक्तत्वातिदेशान्मानान्तरानुसरणं, परीक्षाया अवघ्युत्तीर्णेस्मिन्न मानान्तरवैयर्थ्यात् साक्ष्याभिहितपञ्चाशत् पुराणा-

तिरिक्ते निर्णयान्तरमिति विवेचनीयम्। यत्तु नारदेनैकदेशविभावनेऽपि सर्वस्य विवादविषयस्य देयत्वमुक्तन्तद्यथा --

"अनेकार्थाऽभियुक्तेन सर्वार्थस्यापलापिना।
विभावितैकदेशेन देयं तदपि युज्यते" ॥

इति, तदनेव वचनविरोधेन यत्रैकग्रहणमन्यग्रहणव्यभिचारि तद्विषयं व्याख्येयम्। तद्यथा - यत्र सुवर्णाद्यनेकवस्तु सहितं पात्रं चौरेणापहृतं तत्रैकदेशस्यापि सुवर्णाद्यन्यतमस्य विभावने सर्वमेव देयम्। तथा चैकदेशपदं व्यक्तभूतैकदेशपरम्। एतद्वचनस्य न्यायमूलकत्वाद्राजदण्डविषयं वा। तदुक्तम्-

याज्ञवल्क्येन -- "स्वपणश्चेद्विवादः स्यात्तत्रहीनं प्रदापयेत्।
दण्डञ्च स्वपणञ्चैव धनिने धनमेव च" ॥

एकदेशविभावनेऽपि मया सर्वं देयमित्यादिर्यत्र पण इत्यर्थः। अत्र स्वग्रहणात्परकृतः पणः परेण न देय इति मन्तव्यम्। साक्षिणा न्यूनस्याधिकस्य वा भिन्नाधिक्येऽपि क्रियान्तरमिति मिताक्षरा।

साक्षी च यदा प्रतिज्ञातार्थं पृष्टस्तन्न ब्रूते किन्तु तद्व्याप्यं तत्रापि तन्निगादकस्य वादिनो जय एव, तदभिधानोपस्थापितानुमानादेव वादिप्रतिज्ञातार्थस्य प्रमितत्वात्। नच साक्षिणा तदनभिधानान्न तथेति वाच्यम्, "यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेदि" ति स्मृतेर्न्यायमूलकतया साक्षिपदस्योपलक्षकत्वे केनापि प्रमाणेन यत्प्रतिज्ञातोऽर्थः प्रमितः स जयीत्येवपरत्वात्।

"साध्यांशेऽपि तु गदिते साक्षिभिः सकलं भवेत्।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्त्तितम् ॥"

इति कात्यायनवचनादेकदेशप्रमापणे सर्वदेयता चौर्यादाविति मिताक्षरा। श्रुतसाक्षी तु पृष्टो यत्राहमिममर्थमश्रौषमित्याह तत्र नार्थसिद्धिः शब्दार्थयोर्व्याप्त्यभावात्। किन्तु प्रत्यक्षादिव शब्दादप्ययं यत्रावधारयति तत्राप्रामाण्यशङ्काकलङ्कानालिङ्गितशब्देन प्रमितार्थोऽर्थमेव यत्र निगदति तत्रैवार्थसिद्धिस्तत्कलङ्के तु न स साक्षी नवा तन्निगद आदेय इति। पृष्टानान्तु साक्षिणां वचनद्वैधं—

मनुः-- "बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥"

द्वैधं साक्ष्यन्तरोक्तव्यतिरेकाभिधायित्वम् । एवञ्च न जानामीत्यभिधानेऽपि न द्वैधम् । तस्य ज्ञानाभावपरत्वेन ज्ञेयाभावास्पर्शात् । समेष्विति सङ्ख्यासाम्ये गुणाधिकारः, तत्साम्ये जात्येऽधिका ग्राह्या इत्यर्थः । सर्वथासाम्ये तु प्रमाणान्तरमनुसरणीयमिति भावः ।

नारदः--"साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो मताः ।
तत्साम्ये शुचयो ग्राह्याः तत्साम्ये शुचिमत्तराः ॥"

विप्रतिपत्तिः परस्परविरुद्धभावाभावनिगदः ।

याज्ञवल्क्यः--"उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥"

कात्यायनः—"यदा वै भाषितं कार्यं साक्षिभिर्वादिनां भवेत् ।
प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा ॥
बहुभिर्वा कुलीनैर्वा कूटाः स्युः पूर्ववादिनः ।"

कूटा—अनादेयवचनाः ।

ननु--"क्रियां बलवतीं त्यक्त्वा दुर्बलां योऽभियोजयेत् ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम् ॥"

इति कात्यायनवचनविरोधात्, कथं द्विगुणसाक्ष्यादिग्रहणं घटेतेति चेन्न । स जयेऽवधृते इति विशेषणादेतज्जयावधारणोत्तरविषयत्वात् । याज्ञवल्क्यादिवचनस्य च सामान्यमुखस्य जयानवधारणदशाविषयत्वात् । त्यक्त्वेति अनुपन्यस्येत्यर्थः । तेनानुपन्यस्तमपि बलवत्प्रमाणं दुर्बलप्रमाणप्रवृत्त्युपन्यस्तं संशयदशायां व्यापकमेव, अतएव सप्तविवादान्तरे बलवत्प्रमाणान्तरस्य ग्रहणं तदुपरि तद्ग्रहणमिति रत्नाकरकृता सिद्धवल्लिखितमिति ।

न—"निर्णीतव्यवहाराणां प्रमाणमफलम्भवेत ।
लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत् ।।"

पूर्वमिति पूर्वमुपन्यस्तं बलवत्प्रमाणं यत्साक्ष्यादिकं वादिनादूरत्वादिदोषेण व्यापरयितुमशक्तम्, विचारकेणाशक्यत्वभ्रमेणापुरस्कृत्य यत्र दुर्बलं प्रमाणं माभूत्, तव सप्ताहोत्तरमपि बलवत्प्रमाणोपस्थितौ तत् पुनर्व्यापारभैवेत्यर्थः। इदञ्च पुनर्द्दर्शनं विचारकस्य शक्यव्यापारेण बलवति प्रमाणेऽशक्यव्यापारणत्वभ्रमेण तद्दोषजं तदुक्तसाक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनरिति। प्रदीपादयोप्येवमेव।

बृहस्पतिः--"षाण्मासिकेऽपि समये भ्रान्तिः संजायते यतः।
धात्राक्षराणि सष्टानि पत्रारूढान्यतः पुरा।।"

नारदः- "लेख्यन्तु द्विविधं प्रोक्तं स्वहस्तान्याक्षरं तथा।
असाक्षिकं साक्षिमच्च सिद्धिर्द्देशस्थितेस्तयोः ।।"

स्वलिखितं साक्षिणमनपेक्ष्यैव प्रमाणमन्यलिखितन्तु तमपेक्ष्येत्यर्थः। तच्च ऋणक्रयभोगदानव्यवस्थाजयपत्रभेदात् षोढा। दानपत्रमपि द्वेधा - अराजराजभेदात्। इदञ्च षड्विधमपि सदसद्भेदात्प्रत्येकं द्वेधा।

याज्ञवल्क्यः- "विनापि साक्षिभिर्ल्लेख्यं स्वहस्तलिखितञ्च यत्।
तत्प्रमाणं स्मृतं सर्वं बलोपाधिकृतादृते" ।।

स्वहस्तेति तल्लेख्यप्रामाण्येन योऽभियोज्यस्तल्लिखितमित्यर्थः। बलेत्यप्रामाण्यप्रयोजकार्त्तिरागद्वेषभयशैशवादिसर्वदोषोपलक्षणम्। द्वितीये—

नारदः--'साक्षिणस्तु स्वहस्तेन पितृनामादिपूर्वकम्।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः" ।।

शासने तु याज्ञवल्क्यः-

"दत्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत्।

तत्र चागमिनृपति - परिज्ञानाय पार्थिव: ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्" ॥

निबन्ध आकरादौ नियत ग्राह्यं, छलपत्रं तूक्तं प्राक्। लेख्यस्याप्रामाण्यशङ्कायां लेख्यग्रहीतुस्तन्निरसनीयम्। तत्पुत्रेण तु लेख्याधीनो भोग एवोपन्यस्यो, नतु लेख्यमुद्धरणीयम्। तदाह--

कात्यायन:—"आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान्विशोधयेत्।
तत्सुतो मुक्तिदोषश्च लेख्यदोषस्तु नाप्नुयात्" ॥

बृहस्पति:--"उद्धरेल्लेख्यमाहर्त्ता तत्पुत्रो भुक्तिमेव तु ।
अभियुक्तः प्रमीतश्चेत्तत्सुतोपि तदुद्धरेत्" ॥

अभियुक्त इति लेख्यसाधुत्वज्ञानार्थमभियुक्ते लेख्यग्रहीतरि तदविज्ञाप्यैव प्रमीते तत्पुत्रेण तत्साधुत्वं साध्यमित्यर्थ:।

कात्यायन:--"दृष्टे पत्रे स्फुटं दोषं नोक्तवानृणिको यदि।
ततो विंशतिवर्षाणि क्रान्तं पत्रं स्थिरं भवेत् ॥
शक्तस्य सन्निधावर्थो यस्य लेखेन भुज्यते।
वर्षाणि विंशतिं यावत्तत्पत्रं दोषवर्जितम्" ॥

अथ लेख्यदौर्बल्यम्

व्यास:---"अदृष्टं श्रावितं लेख्यं प्रमीतधनिकर्णिकम्।
अवन्धलग्नकं चैव बहुकालं न सिद्ध्यति" ॥

अदर्शितत्वादिसप्तदोषाश्रयो लेख्यं न प्रमाणमित्यर्थ:। अस्यापवादमाह--

बृहस्पति:--"उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
अप्रगल्भभयार्त्तानां न लेख्यं हानिमाप्नुयात्" ॥

उन्मत्तादीनां लेख्यमदर्शितत्वादिना न हानिमाप्नोतीत्यर्थ:।

## अथ भुक्तिः

व्यासः--"सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।
प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग इष्यते" ।।

प्रमाणमितिशेषः । आगच्छति स्वीभवत्यनेनेत्यागमः क्रयादिः तद्वान् । दीर्घकालः स्मृत्युक्तकालान्यूनकालम्ः, निश्छिद्रो-निरन्तरं, अन्यरवोज्झितः-परविप्रतिपत्तिप्रकाशशून्यः । प्रत्यर्थिनो वादिप्रतिवाद्यन्यतरस्य सन्निधानं यत्र तादृशः । ननु सागमत्वं व्यर्थम् , तद्रहितभोगस्यापि प्रमाणत्वात्तदाह--

नारदः - "अन्यायेन तु यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम् ।।
यद्ध्यनागमसत्यन्तं भुक्तं पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम्" ।।

त्रिपुरुषभोगमाह -

व्यासः - "प्रपितामहेन यद्भुक्तं तत्पुत्रेण च तं विना ।
तौ विना तस्य पित्रा च तस्य भोगस्त्रिपुरुषः" ।

पुरुषजीवनानियमात् पुरुषभोगं परिभाषते -

सएव—"वर्षाणि विंशतिं भुक्त्वा स्वामिनाऽव्याहता सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी ।।
त्रिपुरुषी च त्रिगुणा न तत्रापेक्ष्य आगमः" ।।

एवञ्च त्रिपुरुषभोग आगमनिरपेक्ष्य एव प्रमाणमिति वचनान्तरबिरोधात् । तदाह -

विष्णुः--"सागमेन तु भोगेन भुक्तं सम्यग्यदा भवेत् ।
आहर्त्ता लभते तत्र नापहार्यस्तु तत् क्वचित् ।।"

आहर्त्ता--भोक्ता, अपहार्यस्तद्धनं वादी ।

"पित्रा भुक्तन्तु यद्द्रव्यं भुक्त्याचारेण धर्मतः ।
तस्मिन् प्रेते न वाच्योसौ भुक्त्वा प्राप्तं हि तस्य तत् ।।
त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ।।"

भुक्त्याचारेण निश्छिद्रत्वादिना यथाविधिशक्तस्य सन्निहितस्य विरोधादिकं विनेत्यर्थः ।

याज्ञवल्क्यः—"आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यन्नैव गच्छति ।।"

नारदः—"अनागमन्तु यो भुङ्क्ते बहून्यब्दशतानि च ।
चौरदण्डेन तं पापं दण्डयेदवनीपतिः ।।"

हन्तैवं संशय एवास्तु विरोधादिति चेन्न विषयभेदात् । तथा हि पूर्वेषां वचनानां सांगमसन्देहमुत्तरेषान्तु तदभावनिश्चयमानप्रवृत्तेः । तथा च त्रिपुरुषस्थले आगमसंशयेऽपि भोगप्रमाणम् । अन्यत्र त्वागमनिश्चयसहित एवेति सिद्धम् ।

याज्ञवल्क्यः—"पश्यतो ब्रुवतो हानिर्भूमेर्विंशति - वार्षिकी ।
परेण भुज्यमानस्य धनस्य दशवार्षिकी ।।"

धनस्य गवादेः ।

बृहस्पतिः--"अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ।।"

अध्यासनं क्रियानिरागमः । नन्वनयोरेव वचनयोः परस्परविरोधः । त्रिंशद्वर्षभुक्तेः प्रामाण्योपदेशाद् विंशतिवर्षभुक्तेरर्थतः प्रामाण्यनिरासादिति । न पश्यतो ब्रुवतो हानिरित्यभिधानाद्यत्र विरुद्धं वाङ्मात्रमपि नास्ति तत्र विंशतिवर्षभोग एव प्रमाणम् । त्रिंशद्वर्षे चाविघातिनीति श्रुतेर्विघातपदार्थस्य कलहभोगो भूस्वत्वे प्रमाणमित्यविरोधात् । एवञ्चाभ्यां वचनाभ्यां गवादौ दशवार्षिको भोगस्तथा भूमौ तादृश एव विंशतिवार्षिको भोगः

प्रमाणम्। तत्कथं त्रिपुरुष एवासौ प्रमाणमुच्यत इत्यत्र रत्नाकर - नह्-युक्तवचनं भोक्तुः स्वत्वे प्रमाणम्। किन्त्वन्यत्र, तथाहि - पश्यतो ब्रुवतो हानिरित्यस्य तादृशस्य भोक्तुः पार्श्वे गोभूम्यादिस्वामिना तद्भोगसम्बन्धेन धनन्न लभ्यत इत्यर्थः।

> भुज्यमानान् परैरर्थान् यस्तान् मोहादुपेक्षते।
> समक्षं पश्यतोऽप्यस्य तान् भुक्तिं कुरुते वशे॥"

इति नारदवचनस्यापि असावेवार्थः। **प्रदीपस्तु** - "आधेरनुपभोगेन यत्रासिद्धिस्तद्विषयं पश्यतो ब्रुवत इत्यादिवचनम्। तेन यत्राधिग्रहीत्रा स्वाधेयं भूम्यादि न भुज्यते, नतु प्रथमस्य। तथाच यद्यप्याधौ प्रतिग्रहे क्रीते पूर्वं वलबत्तरेत्यादिकमपि वचनमस्ति तथापि तदपवादकं पश्यतो ब्रुवत इत्यादि वचनन्तथा चापवादकबलाद्द्वितीयस्याधिः सिद्ध्यति। प्राञ्चोऽप्येवं यद्वा हानि-पदामेदम् उपेक्षितुः पक्षो विचारकस्य न्यूनकोटिकः संशयो भवतीत्येवपरम्, नतु हानिर्भङ्गम्। तथा सति दण्डमन्तरेण पुनर्दर्शनहीनस्य गृह्यते वाद इत्यादिवचनसिद्धं न घटेत तस्मात्तादृशहानिमतोऽप्यस्य पुनर्विचारेणैव निर्णयः कार्यः। अतएव —

> "उपेक्षिता यथा धेनुर्विना पानेन नश्यति।
> पश्यतोन्यैस्तथा भुक्ता भूमिः कालेन हीयते॥
> वर्षाणि विंशतिर्यस्य भूमिर्भुक्ता परैरिह।
> सति राज्ञि समर्थस्य तस्य सेह न सिद्ध्यति॥"

इति व्यासवचनयोः पश्यन्तमनादृत्य या यस्यभूमिं परैर्भुज्यते सा तस्य हीयते तदीयत्वेन न निश्चीयत इति रत्नाकरै व्याख्यातम्। किञ्च यदि विंशतिवार्षिकी भुक्तिरेव स्वत्वे प्रमाणं तदा तत एव साध्यसिद्धौ-

> "शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते।
> वर्षाणि विंशतिर्यावत् तत्पत्रं दोषवर्जितम्॥"

इति कात्यायनवचनेन यद्भोगलेख्यदोषनिराकरणार्थत्वमुक्तं तद्व्याहन्येत। **वस्तुतस्तु** - हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्त्तव्यताविधि-

दोषत्वम् । तस्मात्प्रमाणं सर्वथा परिपालनीयम् । नतु तत्रोदासितव्यमित्यत्र तात्पर्यम् । अतएव कल्पतरौ हानिवचनानि लिखित्वा प्रमाणपरिपालनमुपसंहृतम् ।

**याज्ञवल्क्यः**--"आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो ॥"

आगमे विद्यमानेऽपि भोगविरहात्तावत्कालस्वत्वानुवृत्तिर्न भवतीत्यर्थः । यत्र वादिनौ स्वस्वागमबलप्रवृत्तौ आगमयोश्च पूर्वापरभावो न निश्चीयेते । तत्र यस्य भुक्तिस्तस्य भोगो बलीयान्न त्वन्यस्येत्यर्थ इति **मिताक्षराकारः** ।

**नारदः** - "विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु ।
विशेषतस्स्थावराणाञ्च यन्नाभुक्तं स्थिरं न तत् ॥"

स्वत्वसाधकप्रमाणवन्न तद्भवतीत्यर्थः ।

**तथा**—"प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः ।
आध्यादीन्यपि जीर्यन्ति स्त्रीनरेन्द्रधनादृते ॥"

द्विदशाः समाः—विंशतिवर्षाणि । स्त्रीनरेन्द्रधनादृते – स्त्रीधनराजधने विहाय ।

**मनुः**-- "यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥"

दशेति- भूभिन्नं धनपरम् । **गौतमः**--"अजडत्पोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः ।" जडो मूर्खः । पोगण्डः- षोडशवर्षाभ्यन्तरवयस्कः । "बाल आषोडशाद्वर्षात्पोगण्डश्चेति कथ्यत" इति वचनात् । एवञ्च प्रमीतस्य धनं सन्निधावन्येन भुक्तमुत्सर्गतो भोक्तुरिति ज्ञायत इति **रत्नाकरादयः** ।

**मनुः**-- "आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥"

आधिर्बन्धकः । उपनिधिस्तु प्रीत्या भोगार्थं समर्पितं क्षेत्रादि नतु वसनस्त-

मनध्यायेत्यादिस्मृतिलक्षितस्तस्यभोगानर्हत्वात् । न कालात्ययमर्हत: मोक्षणकाले आधातृ पनिधातृभ्यामवश्यं मोक्षणीयावित्यर्थ:। अत्र हेतुमाह-- अवहार्यवि-त्यादिना तौ हि चिरकालावस्थितौ भोक्तुरेवावहार्यौ भवेताम् । भोक्ता च कदाचिदपहरेदपीत्यर्थ:।

बृहस्पति: —"ऋक्थिभिर्वापरैर्द्रव्यं सलक्षं यस्य दीयते ।
अन्यस्य भुञ्जत: पश्चान्न स तल्लब्धुमर्हति ॥
पश्यन्नन्यस्य ददत: क्षितिं यो न विचालयेत् ।
स्वामी शतापि लेख्येन पुनस्तां न समाप्नुयात् ॥"

रोगे

तथा-- "भूमेरभुक्तिर्लेख्यस्य यथा कालमदर्शनम् ।
अस्मारणं साक्षिणाञ्च स्वार्थहानिकराणि तु ॥
तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनम् ।
तेन कार्याणि सिद्ध्यन्ति स्थावराणि चराणि च ॥"

ऋक्थिभिरिति यस्य स्वामिन: समक्षमेव ऋक्थिभिर्वापरैर्वापि तदीयं धनमन्यस्य कृते दीयते तस्मात् सम्प्रदानात्तद्द्रव्यं भुञ्जनात्तद्द्रव्यस्वामी तद्द्रव्यं पुनर्नाप्नोति, तत्र स्वामिनः स्वत्वमुत्सर्गतोपैतीत्यर्थ:।

कात्यायन: —"भुक्तिर्बलवती शास्त्रे सन्ततायाचिरन्तनी ।
विच्छिन्नापि हि सा ज्ञेया या तु पूर्वप्रसाधिता ॥
आदानकालादारभ्य भुक्ति: कार्या निरन्तरा ।
आदानं प्राप्य तस्यान्तु प्रायस्साक्षी प्रवर्त्तते ॥
स्मार्त्ते कालक्रियाभूमे: सागमा भुक्तिरिष्यते ।
अस्मार्त्ते त्वागमाभावात् क्रमात्त्रिपुरुषागता ॥"

सन्तता – अविच्छिन्ना । चिरन्तनी-- व्यासाद्युक्तकालव्यापिनी । विच्छिन्नापीति- या तु भुक्ति: पूर्वै: पितामहादिभि: कृता सा विच्छिन्नापि ज्ञेये-त्यर्थ:। ज्ञेयं दर्शयति आदानेति अस्यामल्पकालायामेव निरन्तरायां तथा-पूर्वोक्तायां सान्तरायामुभयस्यामपि भुक्तौऽमूलभूत आगमे प्रत्ययप्राय: साक्ष्यं

प्रमाणमित्यर्थः। स्मार्त्ते इति स्मार्त्ते स्मरणयोग्ये क्रिया प्रमाणम्, आगमः क्रयादिः, आगमाभावादागमप्रतिसन्धानाभावात्।

तेनायमर्थः- आगमस्मरणयोग्ये समये सागमा भुक्तिर्भूमौ प्रमाणमिष्यते। आगमस्मरणयोस्तु अतिपातिनि समये आगमप्रतिसन्धानविरहिता भुक्तिरेव प्रमाणम्, न त्वागमाभावनिश्चयेऽपि, तत्र सर्वैः स्वत्वनिषेधादिति।

अथ सागमभुक्तेः प्रमाणत्वे व्यर्थविशेषणत्वान्नेदमिदानीं हि मम स्वमिति हि तावत्साध्यम् तत्र। हि स्वत्वभोगे आगमस्य तन्त्रता। तस्य त्विदानीं पर्यन्तमनुवृत्तौ भोगस्येति विवेकः।

याज्ञवल्क्यः—"आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी॥"

आगमो धनोपार्जनोपायः क्रयादिः तत्राभियुक्तस्तमुद्धरेत् लिखितादिना प्रमापयेत्। तत्सुतस्य तु सागमा भुक्तिरेव प्रमाणम्, न त्वागमपरिशोधनमपि तेन कर्त्तव्यमित्यर्थः।

बृहस्पतिः—"आहर्त्ता शोधयेद् भुक्तिमागमञ्चापि संसदि।
तत्सुतो भुक्तिमेवैकां तत्पुत्रादिर्न किञ्चन॥"

आहर्त्ता--- अर्ज्जनकर्त्ता।

कात्यायनः---"येनोपात्तं हि यद्द्रव्यं सोऽभियुक्तस्तमुद्धरेत्।
चिरकालोपभोगेऽपि भुक्तिस्तस्यैव नेष्यते॥"

अर्ज्जकस्य चिरकालभुक्तिरपि स्वागमविभावनं विना न प्रमाणमिष्यत इत्यर्थः।

"यदा कर्त्ताभियुक्तः स्याल्लेख्यं साक्ष्यं तदा गुरु।
भोक्त्रभावेऽपि भुक्तिस्तु सुते ताभ्यां गरीयसी॥"

अर्ज्जकः स्वार्जिते प्रमाणत्वेन लेखादिकं दर्शयेत्। अर्ज्जकाभावे तत्सुतस्य लेखादितो भुक्तिरेव प्रमाणमित्यर्थः।

"लोपभोगे अलङ्कार्यमाहर्त्रा तत्सुतेन वा।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥"

आदिपदं जङ्गममात्रपरम् । अत्र चेयं व्यवस्था– यदर्ज्जयिकस्यापि व्यसाक्षिविरहे पञ्चाङ्गो भोगश्च प्रमाणमेव, वाक्यानि तु प्रायिकपरतया ज्यानि । एवं- पश्वादिष्वपि केवलभोगप्रामाण्यनिषेधः प्राक्परतयैव नेयः ।

याज्ञवल्क्यः--"योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥"

यो भोगो क्रियमाण एव परेणाभियुक्तः कृताच्छेदः समपरेतः मृतः, तस्य ऋक्थी पुत्रादिस्तमर्थमागमेन उद्धरेत् साधयेत्, भुक्तिस्तत्र न प्रमाणम्, पूर्वाभियोगेन सत्प्रतिपक्षितत्वादित्यर्थः । आगमाभावनिश्चयेऽपि षष्ठ्या द्विको भोगः स्वत्वे प्रमाणम् । "अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिरित्यादिवचनस्वरसादिति नव्यास्तन्न । "अनागमन्तु यो भुङ्क्ते बहून्यब्दशतानि" चेत्यत्र सन्तानापेक्षयैकवचनमिति व्याचक्षाणेन पारिजातकृता बह्वब्दशतमपि पितापुत्रादिक्रमेण सन्तानेन भुज्यमानेऽपि वस्तुनि भोगात्स्वत्वमनङ्गीकुर्वतास्य सुदूर मुत्सादितत्वादिति ।

अथान्यभोगेन हान्यपवादः

बृहस्पतिः---"भुक्तिस्त्रिपुरुषी सिद्ध्येदपरेषां न संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिद्ध्यति ॥
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धु॰ सकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्य श्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथाविधैः ।
स्वदीर्घेनापि कालेन तेषां सिद्ध्यति तण्डुलम् ॥"

विवाह्यो-- जामाता ।

मनुः-- "आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः ।
राजस्वं श्रोत्रियस्वञ्च नोपभोगेन शाम्यति ॥"

बृहस्पतिः-- "अशक्तालस - रोगार्त्त बालभीत - प्रवासिनाम् ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥"

शासनारूढम्-- ताम्रपट्टादिलिखितम् ।

कात्यायनः-- 'न भोगं कल्पयेत् स्त्रीषु देवराजधरेषु च ।
बालश्रोत्रियवित्ते च प्राप्ते च पितृतः क्रमात् ॥
न स्त्रीणामुपभोगः स्याद्विना लेख्यात् कथञ्चन ।
सुरश्रोत्रियराज्ञान्तु तथा बालधने मतः ॥
ते प्रीत्याभुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्य· प्रयुज्यते ॥"

दम्यः- दमनार्थं प्रयुज्यते यो बृषभादिः ।

कात्यायनः-- "क्रयं शिल्पिषु निःक्षिप्तं वन्धास्वाहितयाचितम् ।
प्रसह्याभिहरन् मोहाद्धीनो दण्ड्यः स वै भवेत् ॥"

क्रीयत अनेनेति क्रयो मूल्यम् ।

याज्ञवल्क्यः--"आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम् ।
दण्डञ्च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥"

तत् समंदण्डक्षमं शक्त्यनुसारेण दण्डयेत् । एतेषाञ्च भोगानामप्रमाण-तयोक्तमन्यथासिद्धौ तात्पर्यम् ।

## अथ लिखितसाक्षिभुक्तीनां बलाबलम्

नारदः—"लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः ।
कालाभिहरणाद् भुक्तिरिति शास्त्रेषु निर्णयः ॥
त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम् ।
पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिरेभ्यो गरीयसी ॥"

पूर्वपूर्वमिति भुक्तितः साक्षी ततो लिखितं गुर्वित्यर्थः । भुक्तिरेभ्योऽल्प-

कालसाक्षिणेभ्यः पञ्चाङ्गसम्पन्ना भुक्तिर्गरीयसीत्यर्थः। "भुक्तिराभ्यां गरीयसीति" भवदेवपाठः। सतु सुगम एव।

इदन्त्विह चिन्त्यते--यदयं शास्त्रीयो भोगः भोग्यः स्वत्वजनको वा प्रमापको वा। तत्र भवदेवः - न तावदयं जनकः याजनादिवदस्य स्वत्वजनकत्वेनाश्रुतत्वात्। नापि प्रमापकस्तथा हि लिङ्गतया वा स्वत्वमसौ प्रमापयेदनुपपन्नतया वा तत्र नाद्यस्तादृशभोगे स्वत्वेन सह व्याप्तेर्ग्राहकाभावात्। किञ्चानेन प्राचीनस्वत्वस्य सत एव प्रमापणे अन्यायेनापि यद्भुक्तमित्यादि विरुध्येत, नहि स्वमन्यायेन भुज्यत इति, अतएव न द्वितीयोपि। किञ्चेयमनुपपन्नता स्त्रीराजादिधनगोचरः नास्ति यतो न तत्र कदाचिदपि भोगः प्रमाणमिति। तस्मादेवं वाच्यम्-यदयं पूर्वयथोक्तो भोगः पूर्वस्वामिनोऽभोक्त्र्युद्देशेन त्यागात्स्वत्वध्वंसमर्थायति, नहि सम्भवति तन्न जहाति परभोगञ्चेदृशन्तस्मिन् वस्तुनि क्षमत इति।

किञ्च यदुद्देशेन यत्त्यज्यते तत्तेन परिगृहीतं स्वत्वस्य स्वीभवति। यथा सर्वभूतोपयोगित्वेन त्यक्तं, तोयादिति नियमादिदमपि तत एव भोक्तुः स्वीभवति। स्त्रीराजादिधने तु मेवं, भार्य्यायाः स्वत्वाविषयतया राजधनस्यातिविस्तरतया तत्र त्यागस्यैवासम्भवात्।

भूम्यादौ विंशतिवार्षिको गवादौ दशवार्षिको भोगः पूर्वस्वामिनः स्वत्वध्वंसे प्रमाणमिति यत्कालवैषम्यं तद्भूम्यादेर्महाफलत्वेनातिसहृत्वास्पदत्वात्तत्र चिरकालेनैव स्वत्वहानिकल्पनात्। तथा द्रव्यान्तराणाञ्चातथात्वादल्पकालेनापि स्वत्वहानिकल्पनाद्युक्तम्। यच्च भूम्यादावेव कालवैषम्ये भोक्तुः स्वत्वजननं तदपि वचनबलादेव युक्तम्। यथा तदेव हि जन्म पुत्रस्य पितृधने स्वत्वजनकं नतु पुत्र्या इति।

अत्र प्रदीपकृतः —यत्र हि तत्कृतयेदानीं नात्र फलसम्भावना तदिदानीं तेन तत्पर एव भुङ्क्तां पश्चादेस्तत्सकाशात्मभोगां भुवं ग्रहीष्यामीत्यभिसन्धाय भूस्वामी क्षमते तत्रास्ति विंशमाब्दिको भोगो, नतु स्वामिनस्तदुद्देशेन त्याग इति व्यभिचारान्न भोगः। पूर्वस्वामिनस्तत्त्यागे प्रमाणम्, नचात्र पूर्वस्वामिना त्याग-

भावप्रतिज्ञया दिव्यं कार्यम् । तथा च तद्भङ्गे त्यागनिर्णय इति वाच्यम् । तथाऽपि पूर्वभोगसिद्धस्य पूर्वपरिग्रहस्य त्यागादवधारणकालीनत्वेन भोगकृत् स्वत्वाजनकत्वात्तद्वैयर्थ्यात् । किञ्च भूमिस्वामी सचेताः किमिति वृथैव स्वं जह्यात् । नात्र दृष्टमुद्देश्यं तदभावात्, नाप्यदृष्टं धर्मशास्त्रेतिकर्त्तव्यताविरहात् । नच महेच्छत्वसुशीलत्वदयालुत्वादिनाऽपि त्यागासम्भवात् । अत्यजन्नपि तैरेव क्षमत इत्यस्यापि सम्भवात् । नापि यदुद्देशेन यत्त्यज्यते तत्तस्य स्वमिति नियमः, उद्देशेनापरिगृहीते व्यभिचारात् । अपि च त्यागाद्भोक्तुः स्वत्वं स्वरूपसतो ज्ञाताद्वा । नाद्यः अदृष्टचरत्वात् । द्वितीये च तज्ज्ञानं भोक्तुः स्वामिवचनादिना स्यात् ।

तथा च त्वदुद्देशेन मयेदं त्यक्तमिति तत् स्वामिनस्तदभिसन्धिपूर्वकाद्वचनात्तत् स्यात् । इदञ्च दानमेवेति कृतमुपेक्षानुसरणेन । नच यथोक्तक्षमयैव त्यागानुमानम्, अत्यक्तेऽपि सौशील्यादिना क्षमासम्भवात् । नचैवं यथोक्तक्षमायाभोक्तुः स्वत्वानुमानमपि न स्यात्, पूर्वस्वामिनस्तत्र स्वत्वेऽपि सौशील्यादिना तस्यान्यथासिद्धेरिति वाच्यम् । षष्ट्यब्दान् यावत् सौशील्यादिना क्षमासम्भवो हि तादृशभोगस्य भोक्तृस्वत्व प्रमापकत्वं स्मृत्युक्त भज्येत्, तस्मात्तादृशो भोगो भोक्तुः स्वत्वे प्रमाणम् । तच्च पूर्वागमाद्वोत्पद्यतां स्वामिनो भोक्त्युद्देश्यक-तद्वस्तुत्यागाद्वेत्यत्र नाग्रह इति ।

याज्ञवल्क्यः -"आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी" ॥

यदागमे संशयो भवति तदर्ज्जक एवागमं प्रमापयेत् । तत्सुतस्य सागमा भुक्तिरेव प्रमाणमित्यर्थः । यदि तु पूर्वमभियुक्तेनापि पित्रागमशुद्धिर्न कृता तदा पुत्रेणागमशुद्धिः कर्त्तव्यैव । यदाह--

नारदः--"तथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्त्तयेत्" ॥

तं विवादं भोगो भोगमात्रमागमविनाकृतं न निवर्त्तयेदित्यर्थः ।

अथानुपभोगेनासिद्धिः

याज्ञवल्क्यः—"आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो"। आगमे विद्यमानेऽपि भुक्तिविरहात्तावत्कालं स्वत्वं न सिध्यतीत्यर्थः। अत्र यत्रान्यमुद्दिश्य केनचित् किञ्चिद्दत्तं तत्रोद्देश्यस्य स्वीकारव्यञ्जकभोगाभावात् स्वत्वं न निश्चीयत इति न्यायो मूलम्।

केचित्तु एवं व्याचक्षते - यत्र वादिप्रतिवादिनौ स्वस्वागमबलप्रवृत्तौ आगमयोश्च पूर्वापरभावो न निश्चीयते तत्र यस्य भुक्तिस्तस्यागमो बलीयान्न त्वस्येत्यर्थः।

नारदः – "विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावरादि यन्न भुक्तं न तत्स्थिरम् ॥
भुज्यमानान् परैरर्थान् यस्तान् मोहादुपेक्षते ।
समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते वशे" ॥

न तत् स्थिरं चिरकालवर्त्ति स्वत्वव्यवस्थापकप्रमाणवत्तन्न भवतीति यावत्। यः परेण भुज्यमानानर्थान्मोहादुपेक्षते तस्य भोक्तुः पार्श्वे भोगसम्बन्धेन धनं तल्लभ्यं न भवति, स्वयमेवोपेक्षणादित्यर्थः। अत्रैव—

याज्ञवल्क्यः– "पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी" ॥

व्यासः-"उपेक्षिता यथा धेनुर्विना पानेन नश्यति ।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते ॥
वर्षाणि विंशतिं यस्य भुक्ता भूमिः परैरिह ।
मेति राज्ञि समर्थस्य तस्य सेह न सिध्यति" ॥

न सिध्यतीति तस्य सा हीयते तदीयत्वेन न निश्चीयत इति ।

नारदः—"प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः ।
आध्यादीन्यपि जीर्य्यन्ति स्त्रीनरेन्द्रधनादृते ॥"

द्विदशाः समाः। विंशतिं वर्षाणि आध्यादीन्यपीति, वरं विंशभुङ्क्ष्व-इतिवन्नेयम्। आधिः - सीमा। बालधननिक्षेपोपनिधिः। स्त्रीराजस्वं श्रोत्रिय-

मुञ्चनोपभोगेन शाम्यतीत्यादि-नारदवचनेनाधेर्भोगजीर्णतानिषेधात् ।

मनुः -- "आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्य्यौ भवेतां तौ दीर्घकालमवस्थितौ॥"

आधिर्बन्धः उपनिधिः प्रीत्या, भोगार्थं समर्पितं क्षेत्रादि, न कालात्ययमर्हतः। मोक्षणकालेऽवश्यमोक्षणीयावित्यर्थः। अत्र हेतुरवहार्यादितो हि चिरकालावस्थितौ भोक्तुरेव भवेतां, भोक्ता कदाचिदपहरेदित्यर्थः।

बृहस्पतिः - "ऋक्थिभिर्वापरैर्द्रव्यं समक्षं यस्य हीयते।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति ॥
पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत्।
स्वामी शतापि लेख्येन पुनस्तां न समाप्नुयात् ॥"

तथा - "भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम् ।
अस्मरणं साक्षिणाञ्च स्वार्थहानिकराणि तु ॥
तस्माद्यत्नेन कर्त्तव्यं प्रमाणपरिपालनम् ।
तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च ॥"

तथाच हानिवचनानि प्रमाणपरिपालनपराणीति सारम्।

## अथ विच्छिन्नभोगनिर्णयः

बृहस्पतिः—"छिन्नभोगे गृहे क्षेत्रे सन्दिग्धं यत्र जायते।
लेख्येन भोगविद्भिर्वा साक्षिभिस्तद्विभावयेत् ॥
नामापाटागमं सङ्ख्या दिग्भागं कालमेव च।
भोगच्छेदनिमित्तञ्च ये विदुस्तत्र साक्षिणः॥
तदुत्पन्नाश्च सामन्ता ये स्युर्देशान्तरस्थिताः।
मौलास्तु ते समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥
अदुष्टास्ते तु ये ब्रूयुः सन्दिग्धे समदृष्टयः।
तत्प्रमाणं प्रकर्त्तव्यमेवं धर्मो न हीयते ॥
स्थावरेष्वेतदाख्यातं लाभभोगप्रसाधकम्।
प्रमाणहीनवादे तु निर्देश्या दैविकी क्रिया ॥"

सन्दिग्धम्—सन्देहः। नाम- क्षेत्रादेः। आपाटः - सीमा। आगमः स्वत्वहेतुः। सङ्ख्या भूमेरेव। दिग्भागोऽपि तस्या एव। आगमकालः प्रमाण-हीनवादे दृष्टप्रमाणहीनवादे।

अथ युक्तिः

वृहस्पतिः—"असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः।
शपथान्वा प्रयुञ्जीत उपधां वा प्रयोजयेत्॥"

उपधा—युक्तिः।

नारदः—"प्रमादाद्धनिनो यत्र न स्यान्मुख्यं न साक्षिणः।
अर्थञ्चापहुते वादी तत्रोक्तस्त्रिविधो विधिः॥
चोदना प्रतिकालञ्च युक्तिलेशस्तथैव च।
तृतीयश्शपथः प्रोक्तः स्थावरं साधयेत्क्रमात्॥
इतीदं चोद्यमानोऽपि पतिहन्यान्न तद्वचः।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते॥

चोदना प्रतिकालं अमुकं मे धनं देहीति वारं वारं प्रेरणैव।

कात्यायनः—"श्राव्यमानेऽर्थिना यत्र यो ह्यर्थो न विघातितः।
दानकाले पुरा तूष्णीं स्थितः सोऽर्थोऽवमोदितः॥
अर्थिनैवार्थितो यत्र विघातं न प्रयोजयेत्।
त्रिचतुःपञ्चकृत्वो वा परतस्तदृणी भवेत्॥
स्वामिना नृपतिर्विप्रं क्रमेणोक्तं प्रदापयेत्॥
ततोऽन्यं दापयेत्पूर्वं सकृदुक्त्वा विघातिनम्॥"

स्वामिनोत्तमर्णेन उक्तं धनं मे देहीति याचितम्। विप्रमुक्त्वा विघातिनं क्रमेण दापयेत्। विप्रान्यं तु तादृशमक्रमेणापीत्यर्थः। असकृत्प्रार्थितमविहितं धनं विप्रो दाप्यः। सकृत् प्रार्थितमप्यविहितं विप्रो दाप्य इत्यर्थ इत्यन्ये।

नारदः—"चोदनाप्रतिघातहेतुयुक्तिलेशैस्तमन्वयात्।
देशकालार्थसम्बन्ध - परिमाणान्वयादिति॥"

अस्यार्थः—यदा अधमर्णश्चोदनाप्रतिघातं करोति नाहं धारयामीति, तदानुमानापरव्यपदेशादिभिर्युक्तिभिर्निर्णयः कार्यः। अन्यथा यस्मिन्काले येनार्थेन प्रयोजनेनोत्तमर्णे वणिकस्य ऋक्थग्रहणाभियोगः कृतस्तत्र देशादौ तेन प्रयोजनेन तस्य ऋणग्रहणसम्भावितञ्चेत्तदा युक्त्या निर्णयो भवति। एवं यस्य शतसम्भावनापि नास्ति स यद्येवमाह समानेन सहस्रं गृहीतमिति। तत्रापि परिमाणयुक्त्या भवति निर्णयः। एवमधमर्णक्रियादयोपि। यत्र प्रतिमासं कलादानादिरूपाः प्रदीयन्ते तत्रापि युक्त्या निर्णयः। शपथस्त्वतो वक्ष्यते। एवञ्च नारदेन एकदेशविभावनेन सर्वस्यैव विवादविषयस्य यद्देयत्वमुक्तम्—

"अनेकार्थाभियुक्तेन सर्वार्थेष्वपलापिनः।
विभावितैकदेशेन देयं तदपि युज्यते॥"

इति, तस्य यत्रैकभाजनस्थमनेकं सुवर्णरजतादिकं गृहीतं तत्रैक द्रव्यग्रहणविभावनया सकलमेव द्रव्यं देयं भवतीति न विषयः। तत्राविभावितद्रव्यसत्वे मानाभावात्। न ह्यभियोक्तृवचनमात्रादेव तत्सिद्धिः। मिथ्यात्वस्यापि सम्भवात्। नच क्रियान्तरेण साक्ष्यादिनाभियोक्ता तदा तत्र तदवस्थानं ज्ञाप्यम्, तथासति क्रियान्तरेणैव तन्निर्णयाद्युक्तेरप्रयोजकतापत्तेः। किन्तु यत्रैकग्रहणं तदितरग्रहणव्याप्यं भवति तद्विषयः। यद्वा यस्याक्षिप्तानां मध्ये एकमपि विभावयसि तदा सकलमेव मया दातव्यमिति यत्र वादिनोऽभ्युपगमः स तस्य विषयः।

नारदः—"असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्त्तिताः।
लक्षणान्येव साक्षित्वे तेषामाहुर्मनीषिणः॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः।
केशाकेशिगृहीतश्च युगपत्पारदारिकः॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः॥
प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम्॥"

साक्षित्वे-साक्षिस्थाने। साक्षिस्थानमेतेषामविनाभावेन। प्रत्यक्षचिह्नैः रुधिरावतखड्गादिभिः। पारुष्ये वाक्पारुष्ये।

कात्यायनः—"दानं प्रज्ञापनां भेदः संप्रयोगक्रिया च या।
विभापनयनञ्चैव हेतवो हि विभावकः॥"

दानमुत्कोचदानं, प्रज्ञापनाभेदः येन चिह्नेनात्र ज्ञायते तदन्यथाकरणं, सम्प्रयोगक्रिया विषयान्तरेण तदधिकलोभोत्पादनं, केशाकेशि ग्रहणात्पारदारिकः, उल्काहस्तोऽग्निदः, शस्त्रपाणिर्घातकः, लोष्ठहस्तश्चौरः। क्षेपेष्टशतं यथास्वरूपं वा रुधिरस्रावे प्रहारे चातिव्यक्ते न साक्षिणः प्रत्यक्षेचिह्नाभिव्यक्ते चाष्टशतम। क्षेपे पूर्वोक्तलिङ्गनिश्चितप्रहारापह्नवे अष्टशतं पणानां दण्ड इति शेषः। एताश्च युक्तयो दुरवधारणानन्यथासिद्धिमूलकानुमानरूपतया न सर्वसाधारण्यः, किन्त्वतिनिपुणस्तेयमात्रविषयास्ताः। अयमेव प्रत्यक्षनिर्णय इत्यप्युच्यत इति।

## अथ दिव्यानि

नारदः—"युक्तिष्वप्यवसन्नासु शपथैरेनमर्द्दयेत्।
अर्थकालावलापेक्षमग्न्यम्बु - स्वकृतादिभिः॥
घटोऽग्निरुदकञ्चैव विषकोशस्तथैव च।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः॥
सन्दिग्धेष्वभियुक्तानां परीक्षार्थं महात्मना।
प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये॥"

अर्द्दयेत्—पीडयेत्। अग्नीति अग्निर्मेनोपस्थास्यति, जलं न मामाकर्षति, इत्यग्निजलयोर्हस्तप्रक्षेपः। स्वकृतं मे नंक्ष्यतीत्यादिः शपथः न युग्मादिकमिह दिव्यं ग्राह्यम्। तस्य शपथान्यत्वादिति वक्ष्यते। नन्वन्यान्यपि दिव्यानि वृहस्पतिनोक्तानि। यदाह—

"घटोऽग्निरुदकञ्चैव विषं कोशश्च पञ्चमः।
षष्ठश्च तण्डुलः प्रोक्तः सप्तमं तप्तमाषकः॥

अष्टमं कालमित्युक्तं धर्मदं नवमं भवेत् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ।।"

तथा—"अहमुद्देशतो वच्मि सन्दिग्धार्थविशुद्धये ।
देशकालार्थसङ्ख्याभिः संयुक्तान्यनुपूर्वशः ।।
अपराधानुरूपेण साध्वसाधुविवक्षया ।
शास्त्रोक्तेनैव विधिना प्रदातव्यानि नान्यथा ।।"

कोशः - कोशपानम् , स्वप्रसृतित्रयमितत्रिशूनादिस्नपनोदकपानम् । सत्यम्, किन्तु याज्ञवल्क्येन प्रतिनियतं विहितम् । यदाह—

"तुलाग्न्यापो विषञ्चैव दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ।।"

तथा चैतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते । न पुनरिमान्येव दिव्यानीति महाभियोगेऽपि न सर्वत्र । किन्तुशीर्षस्थेऽभियोक्तरि शीर्षं शिरः, तच्च दिव्यकर्तुर्जयपक्षे स्वदण्डस्वीकारः ।

"तुलाधारणंविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ।।
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत् सत्यं वद कल्याणि संशयान्मां विमोचय ।।
यद्यस्मि पापकृन्मातस्तदा मां त्वमधो नय ।
शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ।।
तुलितो यदि बर्द्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ।।

पितामहः—"चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरन्तु तयोर्हस्तौ भवेदध्यर्धमेव वा ।।"

स्मृतिसमुच्चये- "त्वमेव घट जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वयि ।।

तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ।
ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा।।"

व्यासः—"अधोगतिर्न शुद्ध्येत्तु शुध्यत्यूर्ध्वगतिस्सदा ।
समोऽपि न विशुद्धः स्यादेषा शुद्धिरुदाहृता ।।
कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे च दद्याच्छुद्धिं पुनःपुनः।।"

तुलेति अधिवासनदिने तुलितोभिशस्तः कृतोपवासादिरुत्तरदिने प्रातरभिमन्त्र्य तुलनीयो यद्यूर्ध्वगस्तदा जयी, नो चेद्भङ्गीति वर्त्तलाथः।

"करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ।।
त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ।।
तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत्पिण्ड हस्तयोरुभयोरपि ।।
स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।
षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ।।
मुक्त्वाग्निमृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।
अन्तरा पतिते पिण्डेसन्देहे वा पुनर्हरेत् ।।
अग्निवर्णमयं पिण्ड मस्फलिङ्गं सुरक्षितम् ।
पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः ।।
तृतीयतापे सन्ताप्य ब्रूयात्सत्यपुरस्कृतम् ।
शृणिवमं मानवैर्द्धर्मो लोकपालैरधिष्ठितम् ।।
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ।।
व्यवहाराभिशस्तोयं मानवः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ।।"

पितामहः—"त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेच्छनैः शनैः ।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥
अष्टमं मण्डलङ्गत्वा नवमे निक्षिपेद्बुधः ॥"

याज्ञवल्क्यः—"प्रस्खलन्नभियुक्तश्चेत् स्थानादन्यत्र दह्यते ।
न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥
ततः शुद्धस्तयोः प्राश्येद् ब्रीहीन् वाऽथ यवानपि ।
निर्विशेषेण चैषान्तु हस्ताभ्यां मर्दने कृते ॥
निर्विकारे दिनस्यान्ते शुद्धिस्तस्य विनिर्दिशेत् ॥"

विष्णुः—"यो हस्ते क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥"

पूर्वदिने कृतोपवासाधिवासनादिरभिशस्त उत्तरदिने प्रथममण्डले स्थितौ हस्तौ परीक्ष्य तयोर्न्यस्ताश्वत्थसप्तपत्रयोस्तावत् सूत्रवेष्टितयोर्यवदूर्वाशमीजुषोर्न्यस्तलौहयोराद्यमण्डले । ततः क्रमेण मण्डलषट्सु पादौ दत्त्वाऽष्टमे स्थितो नवमे लौहं क्षिपेत् । मण्डलातिक्रमादिसंशये पुनराहरेदिति समुदायार्थः ।

"सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्यकम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥
समकालमिषुं मुक्तमानीयान्यो जवी नरः ।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥
अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वाऽन्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः ॥"

तथा—"त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥"

तथा—"मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ।

आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥
आनीते मध्यमे वाणे भग्नाङ्गः शुचितामियात् ॥"

कात्यायनः—"शिरोमात्रन्तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥
निमज्योत्प्लवते यस्तु दृष्टश्चेत्पाणिना नरः ।
पुनस्तत्र निमज्योसावङ्गचिह्नविभावितः ॥"

नाभिमात्रस्थिरजलस्थस्योरू धृत्वाभिशस्तो मज्जेत् । तदैव बलवानिषुं क्षिपेत् । तञ्च बलवानन्य आनयेत् । तदभ्यन्तर एव यदि मग्नः सकल एवाङ्गेनापि वा उन्मज्जेत्, पूर्वस्थानं वा त्यजेत्तदा भङ्गी, नो चेन्नेत्यर्थः ।

"त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभिशापात् सत्येन भव मेऽमृतम् ॥
एवमुक्त्वा विषं शाङ्गंभक्षयेद्धिमशैलजम् ।
यस्य रोगैर्विना जीर्णं शुद्धिं तस्य विनिर्दिशेत् ॥"

त्वमिति शाङ्गं नामकं विषं यथाविधि खादितमविकारि चेत्तदाऽभिशस्तो जयीत्यर्थः । कोशपानमाह—

"दैवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संस्राव्य पाययेत्तस्माज्जलन्तु प्रसृतित्रयम् ॥
आचतुर्द्दशकादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥"

पितामहः—"शिरोवादिविहीनानि दिव्यानि परिवर्जयेत् ।
चत्वारि तु घटादीनि कोशश्चैवाशिरास्मृतः ॥
तथा— न कश्चिदभियोक्तारं दिव्येन विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥"

नृपाज्ञायामन्यत्रापि न शिरोपेक्षेत्याह—

नारद:- "शिरोवस्थायिनि नरे अभियोक्तर्युपस्थिते ।
दिव्यप्रदानमुदितमन्यत्र नृपशासनात् ॥"

याज्ञवल्क्य:—"रुच्यावान्यतर: कुर्यादितरो वर्त्तयेच्छिर: ।
विनाऽपि शीर्षकात् कुर्यान्नृपद्रोहे च पातके ॥"

अभियोक्त्रभियुक्तयोर्मिथस्सम्प्रतिपत्याऽभियुक्तोऽभियोक्ता वा कुर्यात् । दिव्यरूपप्रमाणस्य भावाभाव्यविशेषगोचरत्वात् ।

कालिकापुराणे —"परदाराभिशापे च चौर्यागम्यागमेषु च ।
महापातकशस्त्रे च स्याद्दिव्यं नृपशासने ॥
विप्रतिपत्तौ विवादे च पणस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिर: पूर्वम्महीपति: ॥
परदाराभिगमने बहवो यत्र वादिन: ।
शिरोहीनम्भवेद्द्रव्यमात्मसंशुद्धिकारणात् ॥"

विप्रतिपत्तौ परदाराभिशापविषयायां, विवादे ऋणादौ, परदाराभिगमन इति चौर्यादीनामप्युपलक्षणम् ।

विष्णु:- "राजद्रोहे साहसे च विना शीर्षप्रवर्त्तनात् ।"

पितामह:—"राजभि: शङ्कितानाञ्च निर्द्दिष्टानाञ्च दस्युभि: ।
आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरोविना ॥"

नारद:—"अशिरांसि च दिव्यानि राजभृत्येषु दापयेत् ।"

बृहस्पति:-"स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिण: ।
विधिदृष्टस्य दिव्यस्य न भेदो जायते क्वचित् ॥"

पितामह:—"प्रत्यक्षं दापयेद्दिव्यं राजा वाधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनान्तथैव च ॥"

ब्राह्मणानां प्रकृतीनाञ्च दिव्यं प्रत्यक्षं दापयेदित्यर्थ: ।

विष्णुकात्यायनौ - "सचैलस्नानमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ।।"

पूर्वेद्युरुपोषितं सचैलस्नातं दिव्यकारिणं उदिते सूर्ये नृपस्य सभ्यानाञ्च ब्राह्मणानाञ्च सन्निधौ सर्वाणि दिव्यानि कारयेत् प्राड्विवाकः ।

पितामहः---"त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा ।
नित्यं दिव्यानि देयानि शुद्धये चार्द्रवाससे ।।"

अयञ्चोपवासस्य त्रिरात्रैकरात्रविकल्पः शक्त्यपेक्षया महाभियोगाल्पाभियोगापेक्षया वा व्यवस्थितः ।

तथा— "दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु तथाध्वर्युः सोपवासो नृपाज्ञया ।।"

अयञ्च प्राड्विवाकस्योपवासो दिव्याङ्गदेवपूजाकारित्वपक्षे । अत्र यद्यपि सूर्योदय इत्यविशेषेणोक्तम्, तथाऽपि शिष्टाचाराद्रविवारादरः ।

तथा— "पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च घटो भवेत् ।
मध्याह्ने तु जल देयं धर्मतत्त्वमभीप्सता ।।
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रेस्तु पश्चिमे यामे विषं देयं सुशीतलम् ।।"

अनुक्तवेलाविशेषाणान्तु तण्डुलादीनां पूर्वाह्ण एव दानम् । "पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्त्तितमिति" नारदस्मृतिः । अथ दिव्यानां देशमाह-

कात्यायनः---"इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रदापयेत् ।।
प्रतिलोमप्रसूतानां दिव्यं देयञ्चतुष्पथे ।
अतोऽन्येषु च कार्येषु सभास्थाने विदुर्बुधाः ।।"

इन्द्रस्थानमिन्द्रध्वजस्थानम् ।

वृहस्पतिः--"यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः ।
अयथोक्तप्रदत्तन्तु न शक्तं साध्यसाधने ॥
अदेशकालदत्तानि वहिर्वादिकृतानि च ।
व्यभिचारं सदा त्वेवं कुर्वन्तीह न संशयः ॥"

वहिर्वादिकृतमभियोक्तारं विना कृतम् । एतच्च प्रायिकम्, आत्मशुद्धिपराणामभियोक्तारं विनाऽपि दिव्यविधानात् ।

कात्यायनः—"साधयेत्तु पुनः साध्यं व्याघाते साधनस्य हि ।
दत्तान्यपि यथोक्तानि राजा दिव्यानि वर्जयेत् ॥
मूर्खैर्लुब्धैश्च नष्टैश्च पुनर्देयानि तानि वै ।"

कथमपि पूर्वदिव्याप्रामाण्य शङ्कायांपुनर्दिव्यं देयमित्यर्थः । अथ दिव्यविशेषे कालविशेषमाह—

पितामहः--"यो यस्य विहितः कालो विधिर्यस्य च यो यथा ।
तं प्रवक्ष्यामि तत्त्वेन वादिनाञ्च बलाबलम् ॥
चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव हि ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
धटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः ॥
शरद्ग्रीष्मे तु सलिलं हेमन्ते, शिशिरे विषम् ॥"

नारदः--"न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां नृपः ॥

अत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । ऊष्णशब्देन शरद्ग्रीष्मयोर्ग्रहणम् ।

ज्यौतिषे—"सिंहस्थे मकरस्थे च जीवे चास्तमिते भृगौ ।
मलमासे न कर्तव्या परीक्षा जयकांक्षिणा ॥

रव्यशुद्धौ गुरौ चैव शुक्रे चास्तमुपागते ।
सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥
नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम् ।
न परीक्षाऽधिवासश्च शनिभौमदिने भवेत् ।।"

अथ वर्णविशेषे दिव्यविशेषमाह---

नारदः—"ब्राह्मणस्य धटो देयः, क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं, शूद्रस्य विषमेव तु ॥
साधारणः सर्ववर्णानां कोशश्च परिकीर्त्तितः ।
विषवर्जं ब्राह्मणस्य सर्वेषां वा तुला स्मृता ।।"

कात्यायनः—"राजन्यग्नि, धटं विप्रे, वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे ।।"

याज्ञवल्क्यः "तुला स्त्रीबालवृद्धान्धपङ्गु ब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ।।"

कात्यायनः - "गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रैष्यान्वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान् ।।"

नारदः--- "क्लीवातुरान् सत्त्वहीनान् परितापार्दितन्निधान् ।
बालवृद्धावदासींश्च परीक्षेत् धटैः सदा ॥
नार्त्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ।।
न मज्जनीयं स्त्रीबालं धर्मशास्त्रविशारदैः ।
रोगिणो ये च वृद्धाश्च पुमांसो ये च दुर्बलाः ।।
निरुत्साहान् व्याधिजुष्टान्नार्त्तांस्तोये निमज्जयेत् ।
सद्यो म्रियन्ते सज्जन्तुः स्वल्पप्राणा हि ते स्मृताः ।।
साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत् ।
न चापि हारयेदग्निं न विषेण विशोधयेत् ।।"

कात्यायनः-- "न लौहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदाञ्चैव विषं दद्यात्तु न क्वचित् ॥
दिव्यन्तु वर्ज्जयेन्नित्यमार्त्तानान्तु गदन्नृणाम ।
तण्डुलेन नियुञ्जीत व्रतिनं मुखरोगिणम् ॥"

व्रतिनं-- तण्डुलाभक्षणव्रतवन्तं, न कुष्ठ्यसमर्थलौहकाराणामग्निर्देयः । शरद्ग्रीष्मयोश्च न कुष्ठिपैत्तिकब्राह्मणानां विषं देयं, प्रावृषि च न श्लेष्मव्याधितानां भीरुणां श्वासकाशरोगिणामम्बुजीविनामुदकम् हेमन्तशिशिरयोश्च, न नास्तिकेभ्यः कोशो, न देये व्याधिनरकोपमृष्टे च ।

पितामहः--- "मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥"

कात्यायन.--"देशकालाविरोधे तु यथायुक्तं पकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्य्यये ॥

अन्येन--प्रतिनिधिना, हारयेत्-- कारयेत्, विपर्यये--अभियुक्तस्यासामर्थ्ये ।

नारदः-- "सव्रतानां कृशार्त्तानां व्याधितानां तपस्विनाम् ।
स्त्रीणाञ्च न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते ॥"

कात्यायनः-- "मातापितृद्विजगुरुराजस्त्रीबालघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रमदानाञ्च मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्त्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेवाभियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र साध्यं स्वकैर्न्नरैः ॥
महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यन्तु पापाभ्यासरते भृगुः ॥

येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
भावयेन्मज्जनैस्तानि नाभिशस्तं त्यजेन्नृपः ॥"

अवष्टम्भे विशेषमाह—

पितामहः— "अवष्टम्भाभियुक्तानां धटादीनि तु दापयेत् ।
तण्डलश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत् ॥"

अवष्टम्भश्चात्र--निश्चयः ।

तथा— "चौर्य्यशङ्काभियुक्तानां तप्तमाषो विधीयते ॥"

कात्यायनः — "शङ्काविश्वाससन्धाने विवादे ऋक्थिनां सदा ।
क्रियासमूहकर्त्तृत्वे कोशमेव प्रदापयेत् ॥"

क्रियासमूहकर्त्तृत्वे सम्भूयैकक्रियाकरणे ।

पितामहः— "विप्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव तु ।
तेषु दिव्यः प्रदातव्यो नित्यं चित्तविशुद्धये ॥"

अथ द्रव्यसङ्ख्यातो दिव्यविशेषाः—

विष्णुः--"अथ समयक्रियाराजद्रोहसाहसेषु यथाकालं निःक्षेपर्णस्तेयेष्वर्थ-प्रमाणात् ।"

समयो--दिव्यम् । राजद्रोहादिषु यथाकालं राजेच्छानुसारेण दिव्यमित्यर्थः ।

दैवीक्रियानुवृत्तौ—

बृहस्पतिः--- "ऋणादिषु च कार्येषु विसंवादे परस्परम् ।
द्रव्यसङ्ख्यान्विता देया पुरुषापेक्षया तथा ॥"

कात्यायनः-- "दत्तस्यापह्नवो यत्र प्रमाणन्तत्र कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥"

कल्पयेत्-- अपह्नुतद्रव्यसङ्ख्यां जानीयात् । स्वल्पेऽपीति - यादृशि

स्वल्पे ऋणादौ दिव्याभावः स्तेयसाहसयोस्तादृश्यपि धने दिव्यमित्यर्थः।

**बृहस्पतिः**—"सङ्ख्या रश्मिरजोमूला मनुना समुदाहृता।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा॥
विषं सहस्रे प्रकृते पादोने च हुताशनः।
त्रिभागोने च सलिलमर्द्धे देयो धटः सदा॥
चतुःशताभियोगे तु दातव्यस्तप्तमाषकः।
त्रिशते तण्डुला देया कोशश्चैव तदर्द्धके॥
शते कृतेपऽह्नुते च दातव्यं धर्मशोधनम्।
गोचोरस्य प्रदातव्यं सभ्यैः फालावलेहनम्॥
एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।
चतुर्गुणोत्तमानाञ्च कल्पनीया परीक्षकैः॥"

रश्मिरजोमूला—

"जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते॥"

इत्यादिका, अग्रिमसङ्ख्याप्येतदनुसारेण। विनये दण्डे निकृष्टानां जातिगुणकर्मभिश्चैवं मध्यमानामुत्तमानाञ्च।

**याज्ञवल्क्यः**—"नासहस्राद्धरेत्फालं न विषं न तुलान्तथा।
नृपार्थेष्वभिशापे च हरेयुः शुचयस्सदा॥"

नासहस्रात् पणसहस्रादर्वागित्यर्थः। नृपार्थे—नृपद्रोहेषु, नृपद्रव्येषु वा। अभिशापे पातकाभियोगे। शुचयः स्नानादिना सदा पूर्वोक्तसङ्ख्यां विनापीत्यर्थः। एतानि तु सहस्रादिवचनानि स्तेयसाहसविषयाणीत्याहुः।

**विष्णुः**—"सर्वेष्वेवार्थजातेषु मूल्यं कनकं प्रकल्पयेत्।"

तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत्, द्विकृष्णलोने तिलकरम् त्रिकृष्णलोने रजतकरम्, चतुःकृष्णलोने कनककरम्, पञ्चकृष्णलोने शीतोद्धृतमही-

करम्, सुवर्णार्द्धोने कोशो देयः, शूद्रस्य ततःपरं यथार्हं घटाग्न्युदकविषाणामन्यतमम्। द्विगुणेऽर्थे यथाविहिता समयक्रिया वैश्यस्य त्रिगुणेर्थे राजन्यस्य चतुर्गुणे ब्राह्मणस्य। न ब्राह्मणस्य कोशन्दद्यादन्यत्रागामिकालसमयनिबन्ध्यक्रियातः। कोशस्थाने च ब्राह्मणं शीतोद्धृतमहीकरमेव शापयेत्। प्राग्दृष्टादोषं स्वल्पेप्यर्थे दिव्यानामन्यतममेव कारयेत्। सत्सु विदितं सच्चरितं न महत्यप्यर्थे। अत्र कनकपदं परिमाणरूपसुवर्णपरम्। तत्र सुवर्णे दूर्वादि यथाक्रमं करे निधाय शपथाः शूद्रेण कर्त्तव्याः। सुवर्णार्द्धोनेऽर्द्धकनक इत्यर्थः। अर्द्धस्वर्णमूल्यकधने शूद्रेण कोशपानं कर्त्तव्यम्। एतद्द्विगुणे वैश्येन एतत्त्रिगुणे क्षत्रियेण एतच्चतुर्गुणे ब्राह्मणेन त एव शपथाः कार्य्याः। शूद्रकोशार्हाधनाद्द्विगुणत्रिगुणयोर्वैश्यक्षत्रियाभ्यां कोश एव कार्यो, ब्राह्मणस्य तु कोशो न देयः। अन्यत्रागामीत्यस्माभिर्मिलित्वा एवङ्कर्त्तव्यमिति यत्र समयः कृतः तस्मादन्यत्र। तत्र तु ब्राह्मणस्यापि कोशो देयः। सीताहलपद्धतिः यथार्हमिति। स्तेयसाहसयोःस्वल्पेप्यर्थे ऋणादौ तु शतसुवर्णाद्यभियोगे—

कात्यायनः—"सर्वद्रव्यप्रमाणन्तु ज्ञात्वा हेमं प्रकल्पयेत्।
हेमप्रमाणमुक्तन्तु तदा दिव्यं प्रयोजयेत्॥
शते विषन्तु पादोने हुतभुक् तत्र दृश्यते।
आपस्त्रिभागहीने तु शतार्द्धे तु तुला स्मृता॥
कोशपानं तदर्द्धे वा दशपञ्चकसप्तसु।
तदर्द्धे तण्डुला देयास्तदर्द्धे तप्तमाषकः॥"

शते सुवर्णस्येत्यर्थः, पादोने पञ्चसप्ततिसुवर्णमितधने। त्रिभागहीने—तृतीयभागहीने सुवर्णशते तदर्द्धे—शतार्द्धार्द्धे, दशपञ्चकसप्तस्विति शतस्य दशमांशे पञ्चमांशे सप्तमांशे वा कोशपानं प्रदातव्यमित्यर्थः। अत्र चाल्पपरिमाणमपकृष्टविषयम्।

वृद्धमनुः—"ज्ञात्वा सङ्ख्यां सुवर्णस्य शतनाशे विषं स्मृतम्।
अशीतेस्तु विनाशे तु दद्याच्चैव हुताशनम्॥

षष्ट्या नाशे जलं देयं स्याच्चत्वारिंशतो घटः ।
त्रिंशद्दशविनाशे वा कोशपानं वृहस्पतिः ॥
पञ्चार्द्धकस्यनाशे वा तदर्द्धस्य च तण्डुलाः ॥"

त्रिंशद्दशविनाशे वेति त्रिंशद्विनाशे दशविनाशे वेत्यर्थः । पञ्चार्द्धकस्य नाशे वेति पञ्चार्द्धस्य एकस्य तदर्द्धस्य वा नाशे कोशपानमित्यर्थः । इमानि तु वचनानि ऋणादिविषयाण्युत्कृष्टविषयाणि चेत्यतो न याज्ञवल्क्यादिविरोध इति । दिव्यविधिस्तु ग्रन्थगौरवभयान्नेह तन्यते ।

अथ शपथाः

मनुः--- "सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक् ।
सत्येन शापयेद् यद्येतन्मयाऽपकृतं तदा ॥"

सत्यातिक्रमजन्यपापभागहं स्यामिति वादयेत् । वाहनायुधैरित्यत्रापि यद्येतन्मयापकृतं तदैतानि वाहनान्यायुधानि वा मम निष्फलानि भवन्त्विति वादयेदित्यर्थः । एवमन्यत्रापि ।

हलायुधस्तु---ब्राह्मणेन सत्यमितिवक्तव्यम् । क्षत्रियेण तु वाहनमायुधं वा स्प्रष्टव्यम् । वैश्येन तु गोबीजस्येन्धनानामन्यतमं स्प्रष्टव्यम् । शूद्रेण तु सर्वमेतत् कर्त्तव्यम् । पातकशब्दश्चात्र पूर्वोक्तशपथानामेव विशेषणम् । तेषां वृथाकृतानां पातकहेतुत्वादिति व्याख्यातम् ।

वृहस्पतिः-- "सत्यवाहनमन्त्रञ्च गोबीजकनकानि च ।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥
एते च शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
साहसेष्वभिशापे च दिव्यानि तु विशोधनम् ॥"

अत्र शपथानां दिव्यभिन्नतयोपन्यासाद् धटादिषु चापरिगणनान्न दिव्य-

त्वमतो न दिव्यधर्माणामुपवासार्द्रवासस्त्वादीनामन्वयः । किन्तु शौचार्थ-स्नानाचमनादिमात्रस्येति द्रष्टव्यम् । शङ्खः-- "इष्टापूर्त्तप्रदानमन्यांश्च शपथान् कारयेदिति ।

मनुः--- "न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥
कामिनीषु विवादेषु गवां भुक्ते तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथैर्नास्ति पातकम् ॥"

कामिनीष्विति रहसि कामिनीसन्तोषार्थं वृथा शपथैः एवं विवाहसिध्यर्थं वृथाशपथैरेवं गोऽर्थं वृथाशपथैरेवमावश्यकाहुतिहेत्विन्धनार्थं वृथाशपथैरेवं ब्राह्मणादिरक्षार्थं वृथाशपथैन दोष इत्यर्थः ।

यमः—"मृषा कृत्वा तु शपथं कीटस्य बधसंयुतम् ।
अनृतेन तु युज्येत वधेन च यथा नरः ॥
तस्मान्न मिथ्याशपथं नरः कुर्याद्यथेप्सितम् ॥"

कोटपदं प्राणिमात्रोपलक्षणम् । तेन यद्येतन्मया कृतं तदा मम ब्राह्मणबध इत्यादौ शपथे मृषाकृते कर्त्तुर्ब्रह्मवधभागिता भवतीत्यर्थः ।

इति क्रियापादः

* * *

## अथ निर्णयः

व्यासः--- "प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।
वादि सम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥
लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥
देशस्थितिः पूर्वकृता चरितं समुदाहृतम् ।
अर्थानुरूपाः शपथाः स्मृताः सत्यधटादयः ॥
तेषामभावे राजाज्ञा निर्णयन्तु विदुर्बुधाः ॥"

प्रमाणैरित्यनेन लिखितसाक्षिभुक्तिनां प्रत्येकं विवक्षातर्कानुमाने हेतु-रित्येकैरविधौ सत्यघटादय इति दैवक्रियामात्रोपलक्षणमतोऽविधत्वम् ।

इदन्तु शपथपदं गौणं प्राचीन विभागानुरोधादित्यवधेयम् ।

अत्र शपथेषु कोशे च निर्णयक्रमः—

कात्यायनः— "आचतुर्द्दशकादह्नो यस्य नो राजदैवकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥"

व्यसनम्— आपत् । घोरमतिपीडाकरम् । कोशाधिकारे—

विष्णुः— "यस्य पश्येद् द्विसप्ताहात् त्रिसप्ताहादथापि वा ।
रोगोग्निर्ज्ञातिमरणं राजभङ्गमथापि वा ॥
तेन ऊर्ध्वं विजानीयात्तथा शुद्धं विपर्यये ॥"

पितामहः— "त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्तु पश्येत न शुचिः स तु मानवः ॥
तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोग्निर्ज्ञातिमरणं सैव तस्य विभावना ॥"

कात्यायनः— "अथ दैवविसंवादः त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दशमेव च ॥
तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगाग्निर्ज्ञातिमरणं दद्यादर्थं दमञ्च सः ॥
ज्वरातीसारविस्फोट - गूढास्थि - परिपीडनम् ।
पत्तरूगानरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥"

दैवविसंवादो रोग. ज्ञातिमरणादिः, तस्यैकस्येति, नतु देशव्यापकोमर-णादिः । किन्तु शपथानन्तरजन्माऽभियुक्तस्यासाधारणो रोगादिर्भङ्गलिङ्ग-मित्यर्थः । शपथाधिकारे—

नारदः-- "ऊर्ध्वं यस्य द्विसप्ताहाद्वै कृतं सुमहद्भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥"

अत्र त्रिरात्रादिव्यवस्था यथाक्रमं ब्राह्मणादिपरेति हलायुधः । यस्य देवस्य स्नपनोदकं पीतं तत् प्रचण्डतातारतम्येन त्रिरात्रादिव्यवस्थेति पारिजातः । देशकालप्राशस्त्योत्कर्षविषयोद्भवत्वे च त्रिरात्रम् । यथा यथा तदपकर्षस्तथा तथा सप्तरात्रादिकल्प इति प्रदीपः । सर्वमिदं सप्तत्रिकादिवर्जं शपथसाधारणम् । आकांक्षातौल्यादभियुक्तस्य जये चाभियोक्तुरेव दण्ड इत्याह--

कात्यायनः -"अवष्टम्भादियुक्तस्य विशुद्धस्य तु कोशतः ।
सदण्डमभियोगञ्च दापयेदभियोजकम् ॥
दिव्येनचोर्ध्वं पुरुषं स्वर्गे यद्धार्मिको नृपः ॥"

अत्र कोशपदं दिव्यपदञ्चोपलक्षणमुत्तीर्णतामात्रे तात्पर्यम् , न्यायतौल्यादिति । जयभङ्गिनोर्दण्डमाह--

कात्यायनः-- "शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ।"

शतार्द्धं पणानाम् । भङ्गिदण्डं विवेचयति स एव---

"विषे तोये हुताशे च तुलाकोशे च तण्डुले ।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥
सहस्रं षट्शतं चैव तथा पञ्चशतानि च ।
चतुस्त्रिद्व्येकमेवञ्च हीने हीने च कल्पयेत् ॥"

हीने भङ्गिनि सहस्रादिकं पणानाम् ।

## अथ निर्णयबलाबलम्

नारदः-"धर्मश्च व्यवहारश्च चरितं राजशासनम् ।
चतुर्द्धा व्यवहारोयमुत्तरः पूर्वबाधकः ॥"

उत्तरः पूर्वबाधक इति धर्मव्यवहारचरितराजशासनेषु यथोत्तरं पूर्व-पूर्वस्य बाधक इत्यर्थः ।

बृहस्पतिः-- "सम्यग्विचार्य कार्यञ्च युक्त्या संपरिकल्पितम् ।
परीक्षितञ्च शपथैर्ज्ञेयो धर्मविनिर्णयः ॥
प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः ।
दिव्यैर्विशोधितः सम्यग्द्वितीयः स उदाहृतः ॥"

अयं द्विविधो धर्माख्यो निर्णयः ।

तथा-- "शीघ्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥"

धर्मः- धर्माख्यो निर्णयः । तेन व्यवहाराख्येन निर्णयन । अवहीयते-- बाध्यत इत्यर्थः । बाधविषयमाह---

कात्यायनः-- "युक्ति युक्तन्तु कार्यस्य दिव्यं यत्र विवर्जितम् ।
धर्मस्ऽ व्यवहारेण बाध्यते तत्र न वृथा ।।"

अयोग्यदिव्याधीनो निर्णयो व्यवहारेण बाध्यत इत्यर्थः ।

बृहस्पतिः-- "देशस्थित्यानुमानेन नैगमानुमतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥"

नैगमाः-- पौराणिकाः ।

नैगमानुमतेनानुमानेनेति सम्बन्धः । अनेन चारिताख्येन निर्णयेन सामान्यमुखशास्त्रानुसारी व्यवहारादयो निर्णयो बाध्यत इत्यर्थः ।

कात्यायनः-- "विरुद्धं न्यायतो यत्त चरित्रं कल्प्यते बुधैः ।
एवं तत्र निरस्येत चरित्रन्तु नृपाज्ञया ॥
अनेन विधना प्रोक्तं बाधकञ्च यदुत्तरम् ।
अन्यथा बाधकं यत्र तत्र धर्मो विहन्यते ॥"

विरुद्धं न्यायत इति न्यायतो विरुद्धं यच्चरित्रं तद्राजाज्ञया निरस्यमित्यर्थः। यद्वा न्यायत इति सार्वविभक्तिकस्तसिः, न्याययोः शास्त्रयोर्वा यत्र विरोधस्तत्रापि राजाज्ञयैव व्यवहार इत्यर्थः।

अथ निर्णीतकृत्यम्

नारदः--"स्वयमभ्युपपन्नोऽपि स्वचर्यावसितोऽपि सन्।
क्रियावसन्नोप्यर्हेत परं सभ्यावधारणम्॥
सभ्यैरवधृतः पश्चाद्राज्ञः शास्यः स शास्त्रतः॥"

स्वयमभ्युपपन्न आत्मनैवाङ्गीकृतस्वपराजयः। स्वचर्यावसितः कम्पस्वेदवैवर्ण्यादिना भङ्गितयावधारितः। क्रियावसन्नः दिव्यादिना क्रियया प्राप्तावसादः प्राप्तपराजय इति यावत्, परमानन्तरं सभ्यावधारणमर्हेत सभ्यानां मिलित्वा पराजितोयमिति कीर्त्तनमर्हेदित्यर्थः।

याज्ञवल्क्यः--"निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत्॥"

भावितः साक्ष्यादिभिरङ्गीकारितः।

मनुः--"अर्थेऽपव्ययमानन्तु कारणेन विभावितम्।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः॥
यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत्।
तौ नृपेण ह्यधर्मज्ञौ दण्ड्यौ तु द्विगुणं दमम्॥"

अपव्ययमानसदलदण्डं, कारणेन साक्ष्यादिप्रमाणेन यावदिति अधमर्णो यावन्तमर्थमपजानीते, यावति धने मिथ्योत्तमर्णोभियुंजीत तावुभावाशयदोषेण विवादप्रवृत्तौ विवादविषयधनाद्द्विगुणं दण्डं दाप्याविल्यर्थः।

आशयदोषव्यतिरेकेण विस्मरणादिना पह्नवेदण्डलेशञ्च शक्तित इत्यवगन्तव्यम्। अत्र च समद्विगुणदण्डलेशानामपह्नोत्तरजातिवयत्वे समाचारा-

दिना व्यवस्था कार्य्या। आशयदोष - बलवदाशयदोषानादाय व्यवस्थेति केचित्। तदाह—

याज्ञवल्क्यः-- "ज्ञात्वापराधदेशञ्च कालं बलमथापि वा।
वयः कर्म च वित्तञ्च दण्डं दण्ड्येषु दापयेत्॥"

बृहस्पतिरपि - "अपराधानुरूपश्च दण्डोऽत्र परिकल्पित" इति सम्प्रतित्युत्तरवदपह्नोतु र्विषयदण्डार्द्धन्दण्ड इत्याह---

व्यासः-- "निह्नुते तु यदा वादी स्वयं तत्प्रतिपद्यते।
ज्ञेया सा प्रतिपत्तिस्तु तस्यार्द्धं विलयः स्मृतः॥"

द्विजातिषु मिथ्याभियोजकशूद्रदण्डमाह---

नारदः-- "मिथ्याभियोजका ये स्युर्द्विजानां शूद्रयोनयः।
तेषां जिह्वां समुत्कृत्य राजा शूले निवेशयेत्॥
निह्नुते लिखितेनैकमेकदेशविभावितः।
दाप्यः सर्वान्नृणेनार्थान्न ग्राह्यस्त्वनिवेदितः॥"

यदानेकसुवर्णरजतताम्रादिकमुत्तमर्णो लेखयेदेतानि मे धारयसीत्युक्त्वाभियुक्तः सर्वं निह्नुते तदैकदेशे सुवर्णरजते वा साक्ष्यादिना विभावितेऽपि सर्वसाक्षिणोऽग्रे विषयमर्थमभियोज्यो दाप्यः। एकदेशविभावनानन्तरन्त्वाक्षिप्तोऽपि भाषाकालेऽनुपन्यस्ते नाभियुक्तपार्श्वे दाप्य इत्यस्यार्थ इति हलायुधः।

नारदः—"अनेकार्थाभियोगे तु सर्वार्थस्यापलापिना।
विभावितैकदेशेन देयं तदपि युज्यते॥"

इदञ्चोभयमपि येषामर्थानां मिथोऽविना भावस्तत्परं स्यादमूलकत्वात्। यद्वा एकदेशे प्रमापिते सर्वमेव दास्यामीति सपणे विवादविषयमिदं, तदाह—

याज्ञवल्क्यः—"सपणश्चेद्विवादः स्यात्तत्र हीनं प्रदापयेत्।
दण्डञ्च स्वपणश्चैव धनिने धनमेव च॥"

स्वयं कृतं पणमित्यर्थः ।

## अथ जयिप्रतिपत्तिः

बृहस्पतिः— "प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोके नियुज्यते ॥"

कात्यायनः --"सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं तदर्थसंयुक्तं तस्मै दद्याच्च पार्थिवः ॥"

तथा-- "निरस्तं लिखितं यत्तु तच्च सभ्यो विनाशयेत् ।
पश्चात्कारक्रियात्रापि निरस्येति न संशयः ॥
निरस्तात्तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥
दासस्त्री - भू - गृहाराम - लेखकानां पराजये ।
एतेष्वेव सदा देयः पशुकारस्तु पार्थिवैः ॥"

पश्चात्कारो— निर्णयानन्तरक्रिया जयपत्रादिका । प्रमाणं साक्ष्यादि । एतेष्वेवेत्यपलक्षणम् , अन्यत्रापि शिष्टैस्तद्दानात् ।

## अथ पुनर्न्यायः

मनुः- "तीरितं चानुशिष्टञ्च यत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्त्तयेत् ॥"

तीरितमिति--तीरपारकर्मसमाप्तावित्यस्य चौरादिकस्य निष्ठायां रूपम् , तेन निर्णीय समापितमित्यर्थः । अनुशिष्टं साक्षिभिरुक्तं यत्र क्वचन ग्रामादिसभायाम् । अयन्तु लक्ष्मीधरादिस्वरस. । ग्रन्थान्तरे तु सार्थकपरमिति । परन्त्विति तत्त्वानुशिष्टत्वे नत्वन्यथेति । तदाह—

कात्यायनः-- "असत्सदिति यः पक्षः सभ्यैरेवावधार्य्यते ।
तीरितः सोऽनुशिष्टश्च साक्षिदौष्ट्यं प्रकीर्त्तितः ॥"

यत्र तु तीरितत्वानुशिष्टत्वयोरप्यधर्मकृतत्वं मत्वा पराजयी पुनः पुनः प्रत्यवतिष्ठते, तत्र तस्य स्वीकारितविवादविषयस्त्रिगुणदण्डस्य पुनर्न्यायदर्शनं कार्यमेवेत्याह--

नारदः—"तीरितञ्चानुशिष्टञ्च यो मन्येत विधर्मतः।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्" ॥

विधर्मकृशत्वप्रकारस्वचेष्टानवसितत्वे पुनर्न्यायदशनञ्चाह स एव--

"साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः।
स्वचर्यावसितानान्तु नास्ति पौनर्भवो विधिः" ॥

साक्षिसभ्यावसन्नानां साक्षिनिगदेन सभ्यावधारणेन च प्राप्तावसादानां पुनर्दर्शनं न्यायदर्शनमित्यर्थः। दूषणे साक्षिणां सभ्यानाञ्च दूषणे सतीत्यर्थः। स्वचर्य्यावसितानां स्वयमेवाङ्गीकृत पराजयत्वेन प्राप्तावसादानां नास्ति पौनर्भवो विधिः न पुनर्व्यवहारप्रवर्त्तनमित्यर्थः।

बृहस्पतिः—"पलायनानुत्तरत्वादन्यपक्षाश्रयेण च।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु" ॥

इदमत्राकूतम् - अदृष्टसाक्षिसभ्यादिभिर्धर्मतो यद्विचारितं तद्वादीच्छामात्रेण द्विगुणदण्डमास्थायाऽपि न विचार्य्यम्। तीरितञ्चानुशिष्टञ्चेति, मनुवाक्य - विरोधादनवस्थापत्तेश्च। यत्र दूषणे प्रमाणसिद्धे तत्र पुनर्विचारणीयमेव -

याज्ञवल्क्यः- "दुर्दृष्टाँस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥"

नारदः-- "असाक्षिकन्तु यद्दृष्टं विमार्गेण च तीरितम्।
असम्मतमतैर्दृष्टं पुनर्दर्शनमर्हति ॥"

तथा - "निश्चित्य बहुभिः सार्द्धं ब्राह्मणैर्वेदपारगैः।
दण्डयेज्जयिना सार्द्धं पूर्वसभ्यांस्तु दोषिणः ॥"

सभ्यानित्यनेन - साक्षिणोप्युपलक्ष्याः ।

याज्ञवल्क्योऽपि — "बलोपाधिविनिर्वृत्तान् व्यव्यहारान्निवर्त्तयेदिति ।" ततश्च निर्णीतमपि साक्षिसभ्यानि दुर्ल्लक्ष्य दूषणमुद्भाव्य पराजितो वादी न स्वीकरोति किन्तु विचारमर्थयते, तत्र द्विगुणदण्डमास्थाय दूषणमेवापाततो विचारणीयम्। सिद्धे च दूषणे द्विगुणदण्डं तिरस्कृत्य पुनस्तद्वतो विचार एव प्रवर्त्तनीयः। दुर्दृष्टाँस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु" इति विलिखितयाज्ञवल्क्यस्वरसादेव। दूषणसिद्धिपक्षे तु वादिनाङ्गीकृतं द्विगुणदण्डं सभ्या दाप्याः। अतिप्रसक्तिवारणस्य राज्ञावव्यकर्त्तव्यत्वात्।

नारदः-- 'दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः।
नहि जातु विना दण्डं कश्चिन्मार्गेवतिष्ठते ॥" इति।

तेन तत्कार्य्यं पुनरुद्धरेदित्यस्य पराजितसाक्षिसभ्यादिदूषणं तद्वतो विचार्य पुनर्विचारं प्रवर्त्तयेदित्यर्थः। युक्तञ्चेदं तीरितत्वानुशिष्टयोः सभ्यसाक्षिकर्त्तृकयोर्विधर्मकृतत्वं तयोरेव दूषणपरम्। नान्यथा तस्तत्त्वनिरूपणमेवोचितम्।

याज्ञवल्क्यः-- "यो मन्येताजितोस्मीति न्यायेनापि पराजितः।
सभायां तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥"

तद्वतः पराजितोऽपि तात्त्विकसाक्ष्यादिदोषमाशङ्क्य विचारस्यासम्यक्त्व मन्वानस्तद्दोषं निरूप्यासत्त्वेनावधार्य्य विवादपदाद्धनाद्द्विगुणन्दण्डन्दाप्या इत्यर्थः। अमात्यप्राड्विवाकयोस्तु दुष्टत्वे न द्विगुणदण्डः, किन्तर्हि, सहस्रमित्याह--

मनुः-- "अमात्याः प्राड्विवाको वा कुर्युर्यत्कार्यमन्यथा।
तत्स्वयं नृपतिः कुर्य्यात्तान् सहस्रन्तु दापयेत् ॥"

सहस्रं पणानां, पणानां द्विशतादीति विष्णुवचनात्। तदयं सङ्क्षेपः-- पूर्वविचारस्यासम्यक्त्वशङ्कायामेव पुनर्विचारः। तत्रापि पराजितस्यादौ द्विगुणदण्डस्वीकारस्ततो विचारप्रवृत्तौ तदुक्तस्य साक्ष्यादिदूषणस्य तेन पूरणे

साक्ष्यादिमात्रदण्डः, विवादपदस्य पुनर्विचारणञ्च, अपूरणे तु पराजितस्यैव दण्डो नतु विचारान्तरमपीति ।

अथ कृतनिवृत्तिः

मनुः-- "यस्मिन् यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्य्यं निवर्त्तेत कृतमप्यकृतम्भवेत् ॥
योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्त्तयेत् ॥"

योगश्छद्म । तेन यद्बन्ध कार्पणादिकृतं तद्राजा निवर्त्तयेदित्यर्थः । उपधिश्छलम् । अत्राधमनादिकमुपलक्षणम् । ततोऽन्यदपि निवर्त्यम् । योगो-विश्रम्भघाती तत्कृतं विक्रयादि निवर्त्तयेदित्यर्थ इति हलायुधः ।

तथा -"बलाद्दत्तं बलाद्भुक्तं बलान्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥"

नारदः---'स्त्रीषु रात्रौ वहिर्ग्रामादन्तर्वेश्मन्यरातिषु ।
व्यवहारः कृतोप्येषः पुनः कर्त्तव्यतामियात् ॥
सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता ।
वहिश्चेद्भाषते धर्मान्नियताद्व्यावहारिकात् ॥"

या नियतव्यावहारिकधर्मवाह्यविषया भाषोच्यते सा प्रतिष्ठितापि लेखादि-प्रमाणवत्यपि सत्या न भवतीति तया योऽर्थः प्रतिपाद्यते असौ नानुष्ठेयो, यथा पुत्रादिमन्तं कश्चिदभियुङ्क्ते अनेन सर्वस्वं मयि दत्तमित्यादि ।

"मत्तोन्मत्ताध्यधीनैश्च वालेन स्थावरेण वा ।
असम्बन्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥

अध्यधीनो--दासा । असम्वन्धोऽनधिकारी ।

याज्ञवल्क्यः -"बलोपाधिविनिर्वृत्तान् व्यवहारान्निर्वर्त्तयेत् ।
स्त्रीनक्तमन्तरागारवहिःशत्रुकृतांस्तथा ॥"

वहिः व्यवहारोचितप्रदेशात् ।

नारदः–"यद्बालः कुरुते काममस्वतन्त्रन्तथैव च ।
अकृतं तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥
स्वतन्त्रोपि हि यत्कार्य्यं कुर्य्यादप्रकृतिङ्गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रः सहेतुभिः ॥
कामक्रोधाभिभूतार्त्तभयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिङ्गताः ॥
तथा दासकृतं कार्य्यम कृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्रेण च कृतं कार्य्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्द्दासः पुत्रश्च तौ समौ ॥"

अस्वतन्त्रग्रहणाल्लब्धेऽपि बाले पुनर्बालग्रहणं पित्रोरभावेऽपि बालस्यास्वातन्त्र्यप्रतिपादनाय । एतच्च कुटुम्वभरणादिरित्तपरम्, कुटुम्वार्थेप्यधीनोपीत्यग्रिमवाक्यात् । प्रकृतिः स्वभावः । अप्रकृतिङ्गतः- अस्वभावस्थ इत्यर्थः । अच्छन्दत इति पितुश्छन्द इच्छां विनेत्यर्थः ।

कात्यायनः –"न क्षेत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृताः सिद्धिमाप्नुयुर्न्नानुवर्णिताः ॥"

अननुमोदिताः स्वतन्त्रेनेति शेषः ।

"स्त्रीकृतान्यप्रमाणानि कार्य्याण्याहुरनापदि ।
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः ॥
एतान्येव प्रमाणानि भर्त्ता यद्यनुमन्यते ।
पुत्रः पत्युरभावे वा राजा वा पतिपुत्रयोः ॥
कुलज्येष्ठः तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत् ।
तत्कृतं स्यात्कृतं कार्य्यं नास्वतन्त्रकृतं कृतम् ॥"

अनापदीत्यनेनापत्पुत्रीकारार्थं स्त्रीकृतान्यपि कृतान्येवेत्युक्तम् । पतिपुत्रयोरभाव इत्यत्र पुत्रपदेन सपत्नीपुत्रोप्युपलक्ष्यते । तेन तेषामभावे राजेति मन्तव्यम् ।

## अथ स्वतन्त्रास्वतन्त्रलक्षणम्

नारदः--"स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्येष्ठं गुणवयःकृतम् ॥"

तथा--"अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्य आचार्य्ये तु स्वतन्त्रता ॥
अस्वतन्त्राः स्त्रियः सर्वाः पुत्रदासपरिग्रहाः ।
स्वतन्त्रस्तत्र तु गृही यस्य तत्स्यात् क्रमागतम् ॥
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात् पोगण्डश्चापि कीर्त्यते ॥
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ।
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ॥
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥"

तयोः - पित्रोः । एतच्च स्वातन्त्र्यास्वातन्त्र्यप्रतिपादनम् । स्वतन्त्रानुमतिं विना परतन्त्रेण कृतमपि राज्ञा निवर्त्तनीयमिति प्रतिपादयितुं न त्वदृष्टार्थकृतनिवृत्तिसन्दंश एव नारदेनविधानात् । एतदेव स्पष्टयति स एव-

"स्वतन्त्राः सर्व एवैते परतन्त्रेषु नित्यशः ।
अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः ॥"

एते राजादयः पूर्वमुक्ताः । तदभावे च पूर्वज इति वचनात् । पितरावृत इत्यत्र पूर्वजादिकं नापीति मन्तव्यम् । अभावे वीजिनो मातेत्यनेन मातुः स्वातन्त्र्यमस्वातन्त्र्यञ्च पुत्रस्येति प्रतिपादितम् । यद्यपि तथापि पुत्रः पत्युरभावे चेति नारदस्वरसादस्वतन्त्रस्यापि पुत्रस्यानुमतिमन्तरेण स्वतन्त्रयापि मात्राऽनापत्काले यत्कृतं कार्यं तत्तु निवर्त्तनीयमेव । नचैवं-पुत्रानुमतिरदृष्टार्था स्यादिति वाच्यम्, पितृपरोक्षे तद्धनस्य पुत्रगामित्वेन तदनुमतेर्दृष्टार्थत्वसम्भावात् । शङ्खलिखितौ - अस्वतन्त्राः पितृमन्तः पितामहे जीवति पितुरपि पुत्रवत्पारतन्त्र्यमेव । ततश्च पितामहानुमत्या पितृकृतं कार्यं सिद्ध-

यति। नान्यथा कनिष्ठो भ्राताऽविभक्तधन एव ज्येष्ठापेक्षया परतन्त्रो ननु विभक्तधनेपीत्याह—

कात्यायनः—'पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव वा।
कनिष्ठो वा विभक्तो वा दासः कर्त्ताकरस्तथा,,॥

हारीतः-–"दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति॥"

क्वचित्कार्य्येऽस्वतन्त्राऽपि प्रमाणमित्याह---

कात्यायनः --"प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये।
यदीमं व्यवहारं प्राक् कुर्वन्तो ह्यनुमोदिताः॥
क्षेत्रादीनां तथैव स्युर्भ्राता भ्रातृसुतः सुतः।
निसृष्टार्थाहृत्य वरणे गुरुणा यदि गच्छति॥
निसृष्टार्थस्तु यो यस्मिँस्तस्मिन्नर्थे प्रभुस्तु सः।
तद्भर्त्ता तत्कृतं कार्य्यं नान्यथा कर्त्तुमर्हति॥"

निसृष्टार्थं वृणोति-

बृहस्पतिः-"यः स्वामिना नियुक्तस्तु धनायव्ययपालने।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु सम्भृतः॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम्।
स्वदेशे वा विदेशे वा स्वामी तन्न विचालयेत्॥"

मनुः--'कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्॥"

अध्यधीनः - परतन्त्रः पुत्रदारादिः। यमाचरेत्-कुर्यात्। तादृशेऽर्थे स्वाम्यनुमत्यपेक्षाऽपि नेति भावः। ज्यायान् स्वतन्त्रः पित्रादिः।

"सुतस्य सुतदाराणां वशित्वमनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥"

एते - "नानुशिष्टौ विसर्गे च विक्रये चेश्वरा मता" इति नारदीय - दानविक्रययोः प्रभुत्वप्रतिपादनं पुत्रत्वे न दानविक्रयपरमतो न विरोध इत्येके। पुत्रस्यानुमतौ पितुस्तद्दानादौ प्रभुत्वमनुमतौ त्वप्रभुत्वमिति सम्प्रदायः ।

इति निर्णयपादः

इति महामहोपाध्याय - वाचस्पतिमिश्रकृतो व्यवहारचिन्तामणिः सम्पूर्णः ।

इति प० श्रीप्रभुनारायण-श्रीधर्मनाथ-श्रीशशिनाथशर्म्म-श्रीरामचन्द्र-सम्पादितो व्यवहारचिन्तामणिः सम्पूर्णः ।

# कामेश्वरसिंह-दरभंगा-संस्कृत-विश्वविद्यालय
# कामेश्वरनगर, दरभंगा

## विक्रेतव्य पुस्तकें

| क्र० सं० | पुस्तक नाम | | लेखक एवं सम्पादक | मूल्य |
|---|---|---|---|---|
| १ | विद्यापति-संस्कृत-ग्रन्थावली-- | | | |
| (१) | प्रथमभाग (हिन्दीअनुवादसहित) (विभागसार एवं शैवसर्वस्वसार) | स० | (१) डॉ० जयमन्त मिश्र<br>(२) डॉ इन्द्रकान्त झा | ७५।- |
| (२) | द्विती भाग (हि. अ. स.) शैवसर्वस्वसार-प्रमाणभूत-पुराणसंग्रह एवं दानवाक्यावली) | स० | (१) डॉ० जयमन्त मिश्र<br>(१) प० श्रीआनन्द झा | ७५।- |
| २ | म० म० गोकुलनाथ-ग्रन्थावली-- | | | |
| (१) | रसमहार्णव | स० | (१) प० श्रीधर्मनाथ झा<br>(२) प० श्री कुमुदनाथ मिश्र | ६।- |
| (२) | आलोक मंगलविचार | स० | (१) ,, ,, | २०।- |
| (३) | मासमीमांसा | | (१) प० श्री धर्मनाथ झा | ६।- |
| (४) | अनुमितिदीधिति विद्योत | स० | (१) ,, ,, | ७।- |
| | | | (१) प० श्री धर्मनाथ झा<br>(२) प० श्री रामसेवक झा | |
| (५) | गोकुलनाथग्रन्थगुच्छ (दिक्कालनिरूपणम् रूढिव्याख्या-रहस्यम् मिथ्यात्वनिरूपणञ्च) | स० | ,, ,, ,, | ७।- |
| (६) | कुण्डकादम्बरी | स० | (१) प० श्री धर्मनाथ झा<br>(२) प० श्रीकुमुदनाथ मिश्र<br>संशोधक-विद्यावारिधि प० श्री रामचन्द्र झा | २०।- |
| (७) | तत्त्वचिन्तामणी उपमान-रश्मिचक्रम् (म० म० गोकुलनाथ) | स० | (१) प० श्री रामसेवक झा<br>(२) प० श्री रामचन्द्र झा | |

३ म० म० वाचस्पतिग्रन्थावली--

| | | |
|---|---|---|
| (१) कृत्यप्रदीपः | स० (१) डॉ० जयमन्त मिश्र | |
| | (२) प० श्री धर्मनाथ झा | २४।- |
| | संशोधक प० श्री कृष्णानन्द झा | |
| (२) श्राद्धचिन्तामणि— | स० (१) डॉ० जयमन्त मिश्र | ३०।- |
| | (२) प० श्री धर्मनाथ झा | |
| | (३) प० श्रीरामचन्द्र झा | |
| (३) आचारचिन्तामणि— | व० (१) डॉ० जयमन्त मिश्र | |
| | (२) प० श्रीधर्मनाथ झा | |
| | (३) प० श्रीकृष्णानन्द झा | |
| | (४) प० श्रीशशिनाथ झा | ३५।- |
| (४) पितृभक्तितरङ्गिणी | (१) प० श्रीरामसेवक झा प्रभृति | |
| | | २५।- |
| (प्रायश्चित्तव्यवस्थासारसमुच्चयसहित) | (२) प०श्रीप्रभुनारायणशर्मा प्रभृति | |
| (५) कृत्यमहार्णवः | (१) प० श्रीरामसेवक झा प्रभृति | ३०।- |

४ सुलभसंस्कृतग्रन्थमाला--

| | | |
|---|---|---|
| (१) मेघदूत (गुटका मूल) | श्री रामचन्द्र मिश्र | ०।५० |
| (२) रघुवंश (मूलमात्र सम्पूर्ण) | ,, ,, ,, | ४।- |
| (३) समासशक्तिदीपिका— | ले० महावैयाकरण दीनबन्धु झा | ५।- |
| (४) उपसृष्टधात्वर्थसंग्रह | ले० ,, ,, ,, | |
| | डॉ० शशिनाथ झा | ६।- |
| (५) मेघदूत (जगद्धरीयरसदीपिनी-व्याख्योपेत) | सं० डॉ० हृषीकेश झा | १२।- |
| (६) कुमारभार्गवीयम् भानुदत्तकृतम् | सं० प० श्रीरामचन्द्र मिश्र | २०।- |
| (७) ध्वनिकल्लोलिनी— (हिन्दी अनुवादसहित) | ले० अनु० प० श्रीआनन्द झा | २५।- |
| (८) विज्ञानं समाजश्च | ले० डॉ० सरयू प्रसाद गुप्त | २५।- |
| | सं० वि० वा० रामचन्द्र मिश्र | |
| (९) सुभाषितावली (हिन्दी अनुवादसहित) | ले० विद्यावाचस्पति प० श्रीउपेन्द्र झा | २०।- |

(१०) मिथिलामाहात्म्य— प० श्रीधर्मनाथ झा ५।-

(११) अभिनन्दनमाला— सं० प० श्रीरामचन्द्र झा ६।-

१२) छोन्दोगानां विवाहपद्धतिः सं० प० श्रीतेजनाथ झा ५।-

३) मिथिला का इतिहास लें० डॉ० रामप्रकाश शर्मा ७५।-

) स्मृति साहस्री— ले० रमाकर १५।=

लौकिक न्याय रत्नाकर— सं० प० श्रीरामचन्द्र मिश्र ४५।-

( ) तिथिनिर्णय — ले० म० म० राजनाथ मिश्र २४।-सजिल्द

(सपरिशिष्टः) सं० वि०वा० रामचन्द्र झा २०।-अजिल्द

(१७) ग्रहणमाला-- ले० म० म० हेमाङ्गद ठाकुर २०।-

सं० प० श्री व्रजकिशोर झा

(१८) नियमावली एवं पाठ्यग्रन्थावली–प्रकाशक सं० वि० वि० (दरभङ्गा) ७।-

(१९८३ से प्रवृत्त)

५ महाराजाधिराज कामेश्वरसिंह-ग्रन्थमाला--

(१) परमलघुमञ्जूषा सं० (१) विद्यावारिधि रामचन्द्र मिश्र १५।=

म० म० शशिनाथ झा कृत (२) डॉ० शशिनाथ झा

सरलाख्यव्याख्योपेत

(२) भारतीयसर्वस्वम् ले० प० श्री भोलानाथ मिश्र ४५।=

(हिन्दीव्याख्योपेत)

(३) प्रयोगपल्लवः (भवनाथकृत) डॉ० शशिनाथ झा ३७।-

(४) तर्कसंग्रह प० श्री आनन्द झा ४५।-

(न्यायबोधिनीसीतापद्याव्याख्यासहित)

(५) शकुन्तलाविवृति ले० प० श्री आँखी झा १५।-

सं० प० श्री कृपाकान्त ठाकुर

(६) उपवनविनोद— प० श्री कृष्णानन्द झा १२।=

(हिन्दीटीकासहित)

(७) वातावरणनाटकम्— डॉ० शशिनाथ झा १२।-

(८) हृत्परिवर्त्तननाटकम्— प० श्री आनन्द झा ७।-

(९) म० म० माधवीयाद्भुतदर्पण प० श्री रामचन्द्र झा

यन्त्रस्थ

(१) न्यायवैशेषिक वार्त्तिक सं० प० श्री अनन्तलाल [illegible]

(२) उणादिरत्न कौमुदी — प० श्री अर्जुन झा

(३) न्यायमञ्जरी — प० श्री आनन्द झा
(हिन्दी टीकोपेत)

(४ लघुशब्देन्दु शेखर — प० श्री ताराकान्त झा

(५) हस्तलेख सूची—

(६ प्रत्यभिज्ञा प्रदीप — प० ... मिश्र

(७) रसिक मनोरञ्जिनी — प० श्री रङ्गेश्वर ...

श्री... प० श्री दीनबन्धु झा

(८) तत्त्वचिन्तामणि — प० श्री आनन्द झा
(आलोक दीपिकाकण्टकोद्धार इत्यादि व्याख्यासहित)

(८) द्वैतनिर्णय
(वाचस्पति) — डॉ जयमन्त मिश्र

विशेष:—प्रकाशन की कीमत कुलसचिव कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय, कामेश्वरनगर, दरभंगा के पदनाम से भारतीय स्टेट बैंक (K.S.D.S, शाखा दरभंगा) बैंक ड्राफ्ट द्वारा पहले ही प्रेषणीय है। आदेश के उपरान्त प्रोफोरमा देयक भेजा जायगा।

अथवा

प्रकाशन मूल्य की राशि अग्रिम भेज कर किसी निकटस्थ बैंक के माध्यम से भी मंगवाया जा सकता है।

विशेष:—त्रैमासिक शोध पत्रिका "विश्वमनीषा" १५/- वार्षिक [विगत ७ वर्षों से संचालित] मूल्य भेजने पर प्राप्य है।

प्राप्तिस्थान—
प्रकाशन विभाग
कामेश्वरसिंह-दरभंगा-संस्कृत-विश्वविद्यालय
दरभङ्गा-पि० को० ८४६००४